ओ३म्

# धातु-प्रदीपः

## मैत्रेयरक्षित-विरचितः

[पाणिनीय-धातुपाठस्य प्राच्यपाठस्य व्याख्यारूपः]

सम्पादकः—

श्रीशचन्द्रचक्रवर्ती भट्टाचार्यः

परिष्कर्त्ता—

युधिष्ठिरो मीमांसकः

प्रकाशकः—

रामलाल कपूर ट्रस्ट
बहालगढ़ (सोनीपत-हरयाणा)
पिन १३१०२१




क्षीरस्वामिविरचिता क्षीरतरङ्गिणी नाम्नी
पाणिनीय-धातुपाठस्य प्राचीनतमा व्याख्या
मूल्य ६०-०० रु०

मुद्रकः—

शान्तिस्वरूप कपूर
रामलाल कपूर ट्रस्ट प्रेस,
बहालगढ़ (सोनीपत-हरयाणा)

प्रथमावृत्तिः ५००
वि० सं० २०४२
सन् १९८६
मूल्य ४०-००

# उपोद्घातः

[श्रीश्रीशचन्द्रचक्रवर्तिभट्टाचार्येण 'आङ्ग्ल'-भाषायां निबद्धस्य डा० श्रीविजयपालविद्यावारिधिना कृतं संस्कृतरूपान्तरम्]

शेषाशेषार्थविद् यो मां शेषाशेषगवीः स्फुटम् ।
विशिष्याध्यापयद् वन्दे तं शेषभूषणोपमम् ॥१॥

मैत्रेयो रक्षितोऽस्ति प्रणेता तन्त्रप्रदीपस्य धातुप्रदीपस्य च । तत्राद्यो ग्रन्थो जिनेन्द्रबुद्धिविरचितन्यासस्य (काशिकाविवरणपञ्जिकाया वा) समीक्षात्मिका टीका वर्तते, यश्च पुनरस्ति वामनजयादित्यप्रणीतायाः काशिकावृत्तेर्विवृतिः । धातुप्रदीपस्तु खलु पाणिनीयधातुपाठस्य व्याख्या विद्यते ।

रक्षितेन स्वकीये धातुप्रदीपे निरदेशि भाष्यं, धातुपारायणम्, अमरसिंहः, महाभारतं, चाणक्यश्लोकः, (काशिका) वृत्तिः, वामनः, जयादित्यः, न्यासः, न्यासकारः, कातन्त्रं, पञ्चतन्त्रं, (उपाध्याय) सर्वस्वं, रूपावतारः, कालिदासः, भारविः, भट्टिः, माघः, वराहनक्षत्र-पुरुषप्रकाशाभिधश्च[1] ग्रन्थः; स्वकीये तन्त्रप्रदीपे[2] च तेन नामग्राहम् उदलेखि भाष्यं, चूल्लिभट्टिवृत्तिः (८।३।६७), चन्द्रगोमी, भागवृत्तिकारः, भर्तृहरिः, वामनः, जयादित्यः, केशवः, क्षपणकः, अनुपदकारः, रत्नमतिः, उदयकरः (७।४।१), जिनेन्द्रबुद्धिः, (धर्म)कीर्त्तिः, उपाध्यायः, कुलानिलस्वामी (७।४।१३), धातुपारायणं, भाष्यटीका (अर्थाद् भाष्यप्रदीपः ७।२।४६), क्षपणकव्याकरणमहान्यासः (४।१।१५५), कातन्त्रं, रूपावतारः (३।१।२२), कालिदासः, भारविः, भट्टिः, व्योषकाव्यं (संभवतः 'घोषकाव्यम्' अर्थाद् बुद्धचरितम् अश्व-

---

१. द्र०—नासृ-धातुः, भ्वादि० ६१४। [अस्मिन् संस्करणे धातुसंख्या ६२६ द्र०]।

२. अस्माभिरद्यावधि न समासादितोऽशेषो हस्तलिखितकोशस्तन्त्रप्रदीपस्य। अस्य द्वात्रिंशतः पादानां केवलं षोडशास्मत्सविधे विद्यन्ते।

घोषकृतम्), कंसवधं (४।१।७३), वेणीसंहारं ((४।१।१५१), मालतीमाधवं (७।२।४४), कीचकवधं, माघश्चेति ।

मैत्रेय उद्ध्रियते भट्टोजिदीक्षितेन, मल्लिनाथेन, सायनाचार्येण (माधवीयधातुवृत्तौ), श्रीपतिदत्तेन (कातन्त्रपरिशिष्टे), शरणदेवेन (दुर्घटवृत्तौ) च । स नोद्धरति नैषधचरितात्, न चोद्ध्रियते पुरुषोत्तमदेवेन स्वभाषावृत्तौ । अथ कैयटोऽस्ति प्रणेता भाष्यटीकाया मैत्रेयोल्लिखितायाः । अतस्तस्य कालो न शक्यते भवितुं प्राक् कैयटस्य, न खल्वपि धर्मकीर्त्तेः । नैव चैषोऽस्त्यर्वाग् दुर्घटवृत्तिकृतः शरणदेवस्य कालात् । आख्यायते यत् कैयट आसीत् समकालिको ज्ञातिः शिष्यो वा मम्मटस्य, यच्च स समजायत १०५० तमदेशीये ख्रीस्तीयाब्दे । धर्मकीर्त्तिः खल्वपि समजनि ख्रीस्तीयाया एकादशाब्द्या उदये । दुर्घटवृत्तिः प्राणीयत ११७२ तमे[1] ख्रीस्तीयाब्दे । अतो मैत्रेयो रक्षितः समवर्तत ११०० तमदेशीय ख्रीस्तीयाब्द इति प्रतीयते ।

रक्षितः स्वधातुप्रदीपं प्रारभते—'**मञ्जुघोषप्रसादेन धातूनां वृत्तिमारभे**' इति । अथ कोऽयं मञ्जुघोषो नाम ? कश्चिद् भूस्वामीति वा क्वचन स्थितस्य तनुकराज्यस्य शासक इति वा,अस्य च वैयाकरणस्याश्रयप्रदोऽसावासीदित्येके परिकल्पयन्ते । मञ्जुघोषो मैत्रेयस्योपास्यो देव इत्यपरः पक्षः । अथ पुरुषोत्तमदेवकृते त्रिकाण्डशेषे मञ्जुघोषस्यान्यतमः पर्यायो जिनभेद इति निर्दिश्यते । ममैतद्विषयनिष्णातास्तु जैनसुहृदः समाश्वासयन्ति माम्—न ह्यस्ति कोऽपि देवो मञ्जुघोषनामा श्वेताम्बरीयायां न वा दिगम्बरीयायां परम्परायां जैनानाम् इति । अपरं च मञ्जुघोष एको वोधिसत्त्वो बौद्धधर्मप्रचारको वा बभूव यो नेपाल-देशे न्युवास । मञ्जुः, मञ्जुश्रीः, मञ्जुनाथः, मञ्जुघोष इति बहुविधम् अभिधीयते सः, उपास्यते च महायानसम्प्रदायकैर्बौद्धैः । अस्य बोधिसत्त्वस्य प्रतिमाश्चित्राणि च शक्यन्ते द्रष्टुं बौद्धप्रतिमालेखने । अस्य देवस्य विवरणानि तेषां प्रतिमाशास्त्रेऽपि विद्यन्ते । साधनमालातत्त्व-परमार्थनासङ्गीत-सद्धर्मपुण्डरीक-सुगता-

---

१. "शकमहीपतिवत्सरमाने एकनभोनवपञ्चविताने । दुर्घटवृत्तिरकारि मुदे वः कण्ठविभूषणहारलतेव ।।१।।" इति, अर्थात् शकाब्दः १०९५ तमः यः ख्रीस्तीयेन ११७२ तमेन वत्सरेण संवदति ।

वदान-सुप्रभातस्तवप्रभृतयो ग्रन्थाः सन्निवेशयन्ति स्तुतीर्नियमांश्च मञ्जुघोषोपासनायाः । अस्य सम्प्रदायस्यैको ग्रन्थ एवमुपक्रम्यते—'**ओं नमो मञ्जुनाथाय । जगद्गुरुं मञ्जुघोषं नत्वा वाक्कायचेतसा……।**'

अपि च, मञ्जुघोषो देव इत्यभ्युपगम्यते तन्त्रप्रदिष्टधर्मानुयायिभिः । तस्योपासनापद्धतयो वृत्तानि च समुद्ध्रियन्ते महामहोपाध्यायकृष्णानन्दभट्टाचार्यकृते तन्त्रसार आगमोत्तर-भैरवतन्त्र-कुक्कुटेश्वरतन्त्रेभ्यः । अत[1] एतत् प्रतीयते यत्—एतद्देवोपसनापरायण एको हिन्दु-तन्त्रसम्प्रदायः प्रावर्त्तत कदाचिद् बङ्गप्रदेशे, नैव चेदन्यत्र क्वचित् । उद्धरति तावत् कृष्णानन्दः स्वतन्त्रसारे—

**जाड्यौघतिमिरध्वंसी संसारार्णवतारकः ।**
**श्रीमञ्जुघोषो जयतु साधकानां सुखावहः ॥१॥**

अस्य ध्यानं यथा—

**शशधरमिव शुभ्रं खड्गपुस्ताङ्कपाणिं**
**सुरुचिरमतिशान्तं पञ्चचूडं कुमारम् ।**
**पृथुतरवरवक्त्रं पद्मपत्रायताक्षं**
**कुमतिदहनदक्षं मञ्जुघोषं नमामि ॥१॥**

अतो रक्षितोल्लिखितो मञ्जुघोषो यदि देवः स्यात्, तर्हि स बौद्धो वा बभूव तान्त्रिको वा । मैत्रेय आसीद् बौद्ध इति प्रायिकं मतम् । अस्य जीवनं, पितृकुलं, जन्मस्थानं वाधिकृत्य नातोऽधिकं किमपि ज्ञायते ।

मैत्रेयः स्तौति भाष्यकारं स्वकीये तन्त्रप्रदीपे (७।१।१२) इत्थ-

---

१. कृष्णानन्द 'आगमवागीश' इत्युपाधिं लेभे । स नदियामण्डलस्थनवद्वीपवास्तव्यः समवयस्कश्च चैतन्यस्य (१४८५ खी०-१५३३ खी०) बभूव । तन्त्राणां सारस्य कर्तृत्वेन स 'निबन्धकार' आसीत् । अयं (=निबन्धः) संगृह्णाति नियमाधिनियमान् तान्त्रिकसम्प्रदायस्य बङ्गप्रदेशे प्रचलितस्य । तस्य तन्त्रसारः प्रारभ्यते—'नत्वा कृष्णपदद्वन्द्वं ब्रह्मादिसुरवन्दितम् । गुरुं च ज्ञानदातारं कृष्णानन्देन धीमता ॥१॥ तत्तद्ग्रन्थगताद् वाक्यान्नानार्थं प्रतिपद्य च । सौकर्यार्थिञ्च संक्षेपात् तन्त्रसारो वितन्यते ॥२॥' पुष्पिका खल्वपि वर्तते—'इति महामहोपाध्यायश्रीकृष्णानन्दभट्टाचार्यविरचितस्तन्त्रसारः समाप्तः ।'

मभिदधानः—'केचिदिति । सूत्रकारमतानुसारिण इति । एतदयुक्तमिव दृश्यते । नहि भाष्यकारमतमनादृत्य सूत्रकारस्य कश्चनाभिप्रायो वर्णयितुं युज्यते । सूत्रकारवार्त्तिककाराभ्यां तस्यैव प्रामाण्यदर्शनात् । तथा चाहुः—चतुष्पञ्चकस्थानकेषूत्तरतो भाष्यकारस्यैव प्रामाण्यमिति'; अधिक्षिपति च रूपावतारकृतं धर्मकीर्ति तत्रैव (७।२।४९) इत्थम्—'अविनीतकीर्तिना कीर्तिना त्वत्राहोपुरुषिकया लिखितं तनिपपतिदरिद्रातिभ्यो वेड् वाच्य इत्यनार्षमिति'।

अनुन्यासो न्यासोद्योतश्चेति ग्रन्थद्वयम् उद्दिष्टमुपलभ्यते बहुषु शास्त्रीयप्रबन्धेषु । तयोर्नाममात्रं प्रकटयति न्यासव्याख्यानत्वं तयोः । सायनाचार्यः स्वधातुवृत्तौ समुल्लिखति वृत्तिप्रदीपम्, यस्याभिधानं भाष्यप्रदीपसंज्ञानुकारं समजायतेति प्रतीयते । अमी सर्वे, अमीषाम् (अर्थाद् अनुन्यासो न्यासोद्योतो वृत्तिप्रदीपश्चेत्यमीषाम्) अन्यतमो वा, सन्त्यभिन्ना मैत्रेयकृत-तन्त्रप्रदीपादिति तु न शक्यते ऽभ्युपगन्तुम् । तस्य कृतीनाम् अस्माकं सर्वे हस्तलिखित-कोशा निबध्यन्ते बङ्गाक्षरेषु बङ्गाक्षरनिबद्धहस्तलिखितकोशेभ्यः कृतासु प्रतिलिपिषु वा । परन्तु रक्षितविरचितग्रन्थाः प्राचलन् बङ्गाद् अन्येषु भारतभूभागेष्वपि । स निरदेशि भट्टोजि-मल्लिनाथ-माधव-शरणदेवप्रभृतिभिरिति वर्णितचरमेव ।

श्रीशचन्द्रचक्रवर्ती

———

# कतिपयानि विवरणानि धातुप्रदीप-हस्तलिखितकोशानाम्

## येषां साहाय्येन मूलपाठस्य मुद्रणप्रतिलेख उपकल्पितः

[पूर्ववद् आङ्ग्लभाषानिबद्धस्य संस्कृतरूपान्तरम्]

मत्सकाशे वर्तन्ते संहत्य षड् हस्तलिखितकोशा उपकल्पयितुं मुद्रणप्रतिलेखं धातुप्रदीपस्य। ते निर्दिश्यन्ते—क, ख, ग, घ, ङ, च चेति।

(क) अयं कोशो बङ्गाक्षरेषु विद्यते। अस्य प्रतिपृष्ठं सप्त पङ्क्तयो वर्तन्ते। अयं प्रतिलेखोऽतिप्रशस्तः,परन्तु खण्डितो विरम्यते चाकस्माद् भ्वादिधातौ लुञ्च (१८३) इत्यत्र। राजशाहीमहाविद्यालय-पुस्तकागारस्याधिकारे वर्ततेऽयं कोशः। वितन्यते ऽयमारम्भात् प्रभृत्या लुञ्च-धातोः, पिण्डीकृत्य सप्त पत्राणि।

(ख) यथायथ-प्रतिलेखोऽयं वर्तते 'क' कोशस्य। अयमपि विरम्यते तथैव लुञ्च-धातौ। अपि खलु 'क' कोश-प्रतिलेखने संजातानि स्खलनान्यत्र पुनरावृत्तानि। प्रतिपृष्ठमत्राष्ट नव वा पङ्क्तयो वर्तन्ते। अत्र हि प्रारम्भतः केवलं षट्पत्राण्युपलभ्यन्ते। अयमपि हस्तलिखितकोशो राजशाहीमहाविद्यालयाधिकारे वर्तते। बङ्गाक्षरेषु वर्तते किलैषः।

(ग) अयं कोशो मद्रप्रदेशीय-विजिगापट्टमस्थार्षग्रन्थागारतः प्राप्तः प्रतिलेखो वर्तते। ग्रन्थागारस्य सविधेऽप्येकः प्रतिलेख आसीत्। कलिकातास्थवङ्गीय 'एशियाटिक सोसाइटी' संस्थाया हस्तलिखितकोश— सं० ३७१८ इत्यस्मादसौ प्रतिलेखोऽस्ति यत्राग्रिमः पाठ उपलभ्यते— **'श्रीरघुनन्दनशर्मणः पुस्तकमिदम्। लिखितमिदं केनचित्। शकाब्दाः १४६०। २६ आषाढस्य'**। आर्षग्रन्थागारेऽसावस्ति सं० ६६२४। आर्षग्रन्थागारोपहृतः प्रतिलेखो देवनागराक्षरेषु विद्यते, परमस्य मूलं

बङ्गाक्षरेष्वस्तीत्यसंदिग्धम् । शकाब्दः १४९० वर्तते १५६८ खीस्तीयाब्दः ।

(घ) अयं कोशो मद्रस्थ-शासकीय-प्राच्य-हस्तलेखग्रन्थागारतः प्राप्तः प्रतिलेखो वर्तते । अयं ग्रन्थागारोऽपि समगृह्णात् पूर्वोक्तकोशस्यैकं प्रतिलेखं, य एकदा रघुनन्दनशर्मणोऽधिकार आसीत्, विद्यते च कलिकातास्थ-बङ्गीय 'एशियाटिक सोसाइटी' संस्थातः । अमुष्मादस्माकं प्रतिलेखोऽस्ति देवनागराक्षरेषु, मूलं तु परं वर्तते बङ्गीयाक्षरेषु । अतो 'ग' 'घ' च स्तोऽनन्यस्मादेव हस्तलिखितकोशात् ।

(ङ) अयमस्त्युत्कृष्टः शुद्धश्च हस्तलिखितकोशः । अयं वर्तते सम्पूर्णश्च बङ्गीयाक्षरेषु च । अत्र ९५ पत्राणि सन्ति । प्रतिपृष्ठं षट् पङ्क्तयो विद्यन्ते । राजशाहीस्थवारेन्द्र-शोधसंघस्याधिकारेऽयं वर्तते । राजशाहीमण्डलान्तर्गत-सालिकग्रामस्य पण्डितक्षितीक्षचन्द्र-भट्टाचार्यसकाशादयं समासादित आसीत् । अयं निर्दिश्यते सं० ५९७ वारेन्द्र-शोधसंघस्य ।

(च) अयं कोशोऽपि राजशाहीस्थ-वारेन्द्र-शोधसंघस्याधिकारे वर्तते निर्दिश्यते च सं० ६४३ । एष एकषष्टिः पत्राणि व्याप्नोति । प्रतिपृष्ठं सन्त्यष्टौ पङ्क्तयः । पत्राकारः—४ × १७ । खण्डितस्त्वेष वर्तते । आद्यानि दश पत्राण्यपेक्ष्यन्ते । खण्डितप्रतिलेखः प्रारभ्यते—'म्लेच्छ अव्यक्तायां वाचि' (२००) इति धातुतः । राजशाहीमण्डलान्तर्गत-हिल्साग्रामस्य पण्डितकालिशरणस्मृतितीर्थसकाशादयं समासादित आसीत् । अयं खलु बङ्गाक्षरेषु विद्यते । अतोऽनुसरिष्यमाणो मूलपाठोऽस्ति वस्तुतः केवलं बङ्गीयहस्तलिखितकोशेभ्यः ।

त्रिवेन्द्रीयो म० म० पण्डितगणपतिशास्त्री समसुसूचदधःसङ्केतितं (=सम्पादकं) यत् तत्सकाशे धातुप्रदीपस्य प्रतिलेखो वर्तते । परमसा अपि विजिगापट्टमस्थार्षग्रन्थागारतः प्रतिलेखोऽस्ति । अतोऽसौ न परिगृहीतो न परामृष्टश्च, यत एकः प्रतिलेखः संगृहीतचर आसीत् तस्मादेव मूलस्रोतसः ।

माधवीय-धातुवृत्तेस्तु प्रभूतं साहाय्यं समुपालम्भि । वाराणस्यां मुद्रितेऽमुष्याः संस्करणे प्रायशो मैत्रेयस्य धातुप्रदीपाद् उद्धृताः सन्दर्भा उपलभ्यन्ते । तेषां भूयिष्ठा अस्माकं 'ङ' 'च' निर्दिष्टप्रतिलेखयोः

सन्दर्भैर्यथायथं संवदन्ति । वस्तुतो 'ङ' कोशः पुस्तक-मूलपाठस्य निश्चयाय प्रभवति । यद्यप्ययं केवलं बङ्गीयपाठं प्रतिनिदधाति, तथाप्येष न्यायतो युक्तितश्चोरीक्रियेत यथार्थप्रतिनिधिर्धातुप्रदीपस्य तत्प्रणेतृसकाशाद् यथागतस्य, सायनाचार्येण स्वधातुवृत्तौ समुद्धृतैः सन्दर्भैः सह पूर्वोल्लिखितसमानरूपत्वादिति ।

ढाका — श्रीशचन्द्रचक्रवर्ती

नवम्बर १९१९

———

# परिष्कर्तुर्निवेदनम्

श्रीमता श्रीशचन्द्रचक्रवर्तिभट्टाचार्येण महावैयाकरणस्य मैत्रेयरक्षितस्य 'धातुप्रदीप' ग्रन्थस्य षण्णां हस्तलेखानां साहाय्येन महताप्रयत्नेन सम्पादितं पादोनशतद्वयमिताभिष्टिप्पणीभिः समलंकृतमेकं संस्करणं १९१९ तमे ऐस्ताब्दे (१९७६ तमे वैक्रमाब्दे) 'वारेन्द्ररिसर्चसोसाइटी' द्वारा 'राजशाही'नगरात् (सम्प्रति बङ्गलादेशे वर्तमानात्) प्राकाशि। इदं संस्करणं देशविभागकारणाद् बहुभ्यो वर्षेभ्यो दुर्लभमासीत्। ग्रन्थोऽयं न केवलमुत्तरवर्तिभिः पाणिनीयशास्त्रव्याख्यातृभिरेव स्व-स्वग्रन्थेष्वसकृद् उद्धृतोऽपि त्वितरवैयाकरणैः कोशव्याख्यातृभिरपि सबहुमानं स्व-स्वग्रन्थेषु स्मृतः। एतेनास्य ग्रन्थस्य प्रामाणिकता सुतरां व्यज्यते। अतोऽस्य दुर्लभतां निवारयितुमेवेदं संस्करणमस्माभिः प्रकाश्यते।

यद्यपि विदुषा श्रीशचन्द्रचक्रवर्त्तिनाऽस्य सम्पादनं प्रयत्नपूर्वकं व्यधायि तथाप्यत्र विवृतानां धातूनां वर्णानुक्रमसूच्या अभावात् तत्तद्धात्वन्वेषणे महद्दुःखमनुभवन्ति स्मच्छात्राः शोधकर्तारश्च। अस्माभिरस्मिन् संस्करणे न्यूनतेयमपाकृता।

यद्यपीदं संस्करणं श्रीशचन्द्रचक्रवर्त्तिमहाभागैः प्रकाशितं संस्करणमेवानुकरोति, तथाप्यत्र 'ग्रामं गच्छन् तृणान्युपस्पृशति' इति न्यायेन मुद्रणसमये यः कोऽपि परिष्कारो विहितः, स त्वित्थं ज्ञेयः—

१—पूर्वसंस्करणेऽत्र विवृतानां धातूनां मातृकाक्रमेणधातुसूची नाऽऽसीत् साऽस्मिन् संस्करणे संयोजिता इत्युक्तं प्राक्।

२—पूर्वसंस्करणे धातुसूत्राणां संख्या न प्रत्ता ऽऽसीत्, साऽस्माभिरस्मिन् संस्करणे प्रतिधातुसूत्रमादौ निवेशिता। धातुसूत्रसंख्याया निदशेन धातुसूच्यां धातूनां निर्देशे सुकरताऽभूत्।

३— पूर्वसंस्करणे धातुसंख्या धातुसूत्रानन्तरं मुद्रिता ऽऽसीत्, सा ऽस्माभिर्धातुसूत्रव्याख्यानन्तरमन्ते नीता। धातुसंख्यानिर्देशे यत्र क्वचिदशुद्धिरसीत् साऽप्यत्र दूरीकृता।

४—पूर्वसंस्करणे श्रीशचन्द्रचक्रवर्त्तिभिर्ग्रन्थादावुपन्यस्तस्य श्लोकस्य द्वितीयचरणस्यान्ते (१) संख्या निर्दिश्याधस्ताद् 'इत्संज्ञाविधायक-इत्संज्ञाफलबोधक-गणफलनिदर्शकानि संकीर्णानि च सप्तपञ्चाशत् पाणिनीयसूत्राणि सवृत्तिकानि निर्दिष्टान्यासन्, तानि पाणिनीयशास्त्राध्येतॄणां तद्वेदितॄणां च कृते न विशेषोपकारीणीति मत्वाऽस्मिन् संस्करणे निष्काशितानि। अन्याः सर्वाष्टिप्पण्यो यथावदिह प्रकाशिताः। बहुत्र मूलपाठे टिप्पणीनिर्दशिकाः संख्या अस्थान आसन्, ता यथास्थानं स्थापिताः।

५—पूर्वसंस्करण उणादिसूत्राणां स्थाननिदर्शनाय पादसंख्याया अनन्तरम् उणादिसूत्राणामादित आरभ्यान्तपर्यन्तम् एकीकृत्य संकलिता या सूत्रसंख्या सिद्धान्तकौमुद्यां निर्दिष्टा वर्तते,सा प्रदत्ताऽऽसीत्। तयोणादिसूत्राणां स्थानपरिज्ञाने काठिन्यमनुभूय तत्र प्रतिपादं या सूत्रसंख्या वर्तते,सा निर्दिष्टा। यत उणादिवृत्तिषु प्रायेण सूत्राणां नैयून्याधिक्यं वर्तते ऽतोऽत्र निर्दिष्टायां सूत्रसंख्यायां यदि तत्सूत्रं नोपलभ्येत तर्हि पूर्वपराणि द्वित्राणि सूत्राण्यवलोकनीयानि।

६—अस्मिन् संस्करणे धातुसूत्राणि ग्रन्थानां ग्रन्थकाराणां च नामानि तथोद्धरणानि स्थूलाक्षरेषु मुद्रितानि। ग्रन्थान्ते च वर्णानुक्रमेणैतेषां सूच्योऽपि मुद्रिताः।

७—अस्मिन् संस्करणे ऽस्माभिः काश्चन नूतनाष्टिप्पण्यः प्रदत्ताः। तासां पृथक्त्वेन परिज्ञानार्थं ताः ☼ चिह्नेनाङ्किताः, अन्ते च 'यु० मी०' संकेतः कृतः। क्वचित् पूर्वटिप्पणीषु परिवर्धनं कृतम्, तत्र परिवर्धितः पाठः [ ] कोष्ठके निबद्धः।

**पुनः सम्पादनस्यावश्यकता**—अस्य धातुप्रदीपस्य शतश उद्धरणानि विविधग्रन्थेषूपलभ्यन्ते। विशेषतः कृष्णलीलाशुकमुनिविरचिते **'दैव'**-व्याख्यानभूते **पुरुषकारे**, सायणाचार्यविरचितायां **धातुवृत्तौ** नामनिर्देशपुरःसरं निर्दिश्यन्ते। अतो विभिन्नग्रन्थेषूपलभ्यमानानामुद्धरणानां साहाय्येनास्य ग्रन्थस्य पुनःसम्पादनं परमावश्यकं वर्तते।

**त्रुटिः**—हिन्दीभाषायां दीर्घस्य ॠकारस्य मात्राया अप्रयोगात् प्रायेण मुद्राक्षरनिर्मातारो न तस्य मात्रां निर्मान्ति। अस्माभिः सूक्ष्माक्षरेषु (व्हाइट मोनो) दीर्घॠकारस्य या मात्रा समुप-

लब्धा सैवेह दीर्घऋकारान्तानां धातूनां पाठे प्रयुक्ता, परन्त्वियं मात्रा ऽत्यन्तं सूक्ष्मा प्रायेण दृष्टचगोचरा इव वर्तते। मन्येऽनेन पाठकाः प्रायेण भ्रान्ता भविष्यन्ति, परन्त्वन्यत्साधनमपि नासीदस्मत्समीपम्।

**शुद्धि-पत्रम्**—प्रचलितानि हिन्दीभाषाया मुद्राक्षराणि संस्कृत-ग्रन्थानां प्रकाशने प्रायेणानुपयोगीनि सन्ति। यतो ह्यत्र मुद्रणकाले उपरिष्ठा अधस्थाश्च मात्राः, उपरितनो रेफो ऽनुस्वारश्च प्रायेण नश्यन्ति।

एतादृश्यो ऽशुद्धयः केषुचित् पुस्तकेषूपलभ्यन्ते केषुचिन्न। अतोऽत्र या विशिष्टा अशुद्धयोऽस्माकं दृष्टिगोचरा अभूवन् ता ग्रन्थान्ते अग्रे विषयसूच्या अपरे पृष्ठे 'शुद्धिपत्रे' यथावत् संशोधिताः।

**रामलालकपूर ट्रस्ट** **विदुषां वशंवदः**

**बहालगढ़ (सोनीपत-हरयाणा)** **युधिष्ठिरो मीमांसकः**

———

# धातुप्रदीपस्य विरचयिता मैत्रेयरक्षितः

संस्कृतभाषायाः प्राचीनैरर्वाचीनैश्च बहुभिर्विद्वद्भिः शब्दानुशासनानि विरचितानि। प्राचीनेष्वार्षेषु शब्दानुशासनेषु पाणिनीयमेवैकं शब्दानुशासनं साङ्गोपाङ्गं वृत्ति-वार्त्तिक-भाष्यादिभिः समलङ्कृतम्, तद्व्याख्योपव्याख्यादिभिः पुष्पितं पल्लवितं चोपलभ्यते। भगवतः पाणिनेः प्राक्तनानि निखिलान्यपि व्याकरणानि नामशेषतां गतानि। भगवतः पाणिनेरपरकालेऽपीयं शास्त्रप्रवचनधारा सततं प्रवहमानैव दृश्यते। समेषामपि शब्दानुशासनप्रवक्तॄणां, तद्ग्रन्थानां व्याख्यानोपव्याख्यानप्रवक्तॄणामितिहासो ऽस्माभिः '**संस्कृत व्याकरणशास्त्र का इतिहास**' इति नाम्नि भागत्रयोपेते ग्रन्थे यथावन्निबद्धः।

व्याकरणशास्त्र-प्रवचनाय सर्वेऽपि शब्दाः प्रकृतिप्रत्यय-विभागद्वये विभज्यन्ते। तत्र शब्दानां मूलभूताः प्रकृतयः शब्दशास्त्रप्रवक्तृभिर्यस्मिन् ग्रन्थे संकलिताः स **धातुपाठ**-नाम्ना प्रसिद्धिं गतः। सर्वैरपि प्राचीनैरर्वाचीनैश्च शास्त्रप्रवक्तृभिरयं धातुपाठः शब्दानुशासनाद् बहिः तत्सहायकेषु खिलपाठेषु संगृह्यते।

प्राचीनानामर्वाचीनानां च समस्तानां धातुपाठानां तद्व्याख्यातॄणां चापीतिवृत्तं पूर्वोक्त एव व्याकरणेतिहासग्रन्थे विस्तरेणोपनिबद्धम्। पाणिनीयधातुपाठस्य व्याख्यातॄणामितिहासोऽस्माभिः स्वसम्पादितायाः क्षीरतरङ्गिण्या आदावपि समुट्टङ्कितः। इह केवलं धातुप्रदीपस्य विरचयितुर्मैत्रेयरक्षितस्येतिवृत्तं संक्षेपेण प्रस्तूयते।

### मैत्रेयरक्षितः

मैत्रेयरक्षितनाम्ना बौद्धविदुषा पाणिनीयधातुपाठस्य धातुप्रदीपनाम्न्येका लघ्वी वृत्तिर्विरचिता।

**परिचयः**—मैत्रेयरक्षितः कस्मिन् काले कुत्र च जन्म लेभ इति न कथंचिदपि विज्ञायते।

**कदाचिद् बाङ्गः**—धातुप्रदीपे बहुत्र धातोर्दन्त्योष्ठ्यादित्वे **न शसददवादिगुणानाम्** (अष्टा० ६।४।१२६) इति सूत्रेण एत्वाभ्यास-

लोपयोः साक्षात् प्रतिषेधे प्राप्तेऽपि चन्द्रसम्मतया एत्वाभ्यासलोपप्रतिषेध उदाहृतः। यथा—

**१ – वज व्रज गतौ** ( १।१५२ )········**एत्वाभ्यासलोपप्रतिषेधश्चास्य चान्द्रैरुदाहृतः—ववाज ववजतुः···** । पृष्ठ २२ ।

**२– ष्टन वन शब्दे** ( १।३०० )········**ववान ववनतुः ववनुः । अस्यैत्वाभ्यासलोपनिषेधश्चान्द्रैरुदाहृतः** । पृष्ठ ३५ ॥

एतेनानुमीयतेऽयं मैत्रेयः कदाचिद् बङ्गदेशीयः स्याद् । बङ्गदेशीया हि प्रायेण बवयोरभेदेनोच्चारणं विदधति।[1]

**कालः**—सर्वानन्देनामरटीकासर्वस्वे धातुप्रदीपस्तदीया काचिट्टीका चासकृद् उद्धृता। टीकासर्वस्वश्च सर्वानन्देन १२१६ वैक्रमाब्दे निर्मितः[2]। अतः १२१६ वैक्रमाब्दात् पूर्वभाविनी धातुप्रदीपटीका, ततः पौर्वकालिकश्च धातुप्रदीप इत्येतावत् सुनिश्चितम्। अत एवास्माभिः स्वीये व्याकरणेतिहासे धातुप्रदीपस्य रचनाकालः ११६५ वैक्रमाब्दात् ११९० वैक्रमाब्दपर्यन्तमनुमितः। इयमस्योत्तरा सीमा ।

मैत्रेयरक्षितो बहुत्र धातुप्रदीपे एके अपरे केचित् पदैः क्षीरस्वामिविरचितां क्षीरतरङ्गिणीमुद्धरति । तथाहि—

१ – **ऋञ्जते, ऋञ्जाञ्चक्रे·····। केचित्तु आनृञ्जे इति प्रत्युदाहरन्ति**। धातुसूत्र १।१०६, पृष्ठ १६ ।

अत्र क्षीरतरङ्गिण्यां १।११० धातुसूत्रव्याख्याने **'ऋञ्जते आनृञ्जे'** इत्युदाहृतम्। अत्रस्थाऽस्मदीया टिप्पण्यपि द्रष्टव्या (क्षीर० पृष्ठ ३८,[3] टि० ६) ।

२—**तुहिर् उहिर् इत्येके**। धातुसूत्र ४७२, पृष्ठ ५० ।

---

१. यथा पुरुषोत्तमदेवो भाषावृत्तौ प्रत्याहारान् निर्दशयन् **'हश् वश्, झश्, जश्, पुनर्बश्'** इत्याह ।

२. इदानीं चैकाशीतिवर्षाधिकसहस्रैकपर्यन्तेन (१०८१) शकाब्दकालेन ······(१०८१ शकाब्दः=१२१६ विक्रमाब्दैः)। टीकासर्वस्व १।४।२१॥

३. अत्र क्षीरतरङ्गिण्या या पृष्ठसंख्या निर्दिष्टा वर्तते, सा २०४२ वैक्रमाब्दे मुद्रितस्य द्वितीयसंस्करणस्य ज्ञेया ।

अयं पाठः क्षीरतरङ्गिण्यां तुहिर् उहिर् अर्दने धातुसूत्र १।४८७) इत्येवं पठ्यते। क्षीर० पृष्ठ १०४।

३—**अपरे तु वावृतु वरणे इति परस्मिन् वा-ग्रहणं संबध्य धातुमेकार्थमनेकाचं मन्यन्ते वावृतु वरणे इति वावृत्यते। "ततो वावृत्यमानासौ रामशालां न्यविक्षत"** इति। धातुसूत्र ४।४७, पृष्ठ९५।

क्षीरतरङ्गिण्यां **वावृतु वरणे** ४।४६, इति धातुसूत्रं निर्दिश्य **'वावृत्यते। ततो वावृत्यमाना सा रामशालामविक्षत'** इत्येवं रूपेण पठ्यते। क्षीर० पृष्ठ २१७।

४—**प्रीतिचलनयोरित्येके**। धातुसूत्र ५।१३, पृष्ठ १०३॥

अत्र क्षीरतरङ्गिण्याः ५।१५ धातुसूत्रं तत्रस्था टिप्पणी चावलोकनीया। क्षीर० पृष्ठ २३९।

५—**ष्वादयस्त्वागणान्ताः। तेषां समाप्त्यर्थमत्र वृत्करणमित्येके**। पृष्ठ १३५।

अत्र क्षीरतरङ्गिणी (धातुसूत्र ९।३३, पृष्ठ २८३) द्रष्टव्या।

६—**भासार्था इत्येके। भासार्था दीप्त्यर्थाः**। धातुसूत्र १०।१८९, पृष्ठ १५३।

अत्र क्षीरतरङ्गिणी (धातुसूत्र १०।१९७, पृष्ठ ३१६, टि० ३) अनुसन्धेया। क्षीरस्वामिनश्च काल ११५० वैक्रमाब्दात् प्राक्तनः। अत इयं मैत्रेयरक्षितस्य कालस्यावरा सीमा। एतेन सामान्यतयेदं शक्यते वक्तुं यन्मैत्रेयः ११५० वैक्रमाब्दादनन्तरं धातुप्रदीपं रचयाञ्चकार।

**विद्वत्ता**—मैत्रेयरक्षितो व्याकरणशास्त्रस्यासामान्यपण्डित आसीत्। अस्य तन्त्रप्रदीपनाम्नी न्यासव्याख्या अतिविपुला वैदुष्यपूर्णा च वर्तते। धातुप्रदीपान्ते स स्वयमाह—

**वृत्तिन्यासं समुद्दिश्य कृतवान् ग्रन्थविस्तरम्।**
**नाम्ना तन्त्रप्रदीपं यो विवृतास्तेन धातवः॥१॥**

**आकृष्य भाष्यजलधेरथ धातुनाम-**
**पारायणक्षपणपाणिनिशास्त्रवेदी।**
**कालापचान्द्रमततत्त्वविभागदक्षो**
**धातुप्रदीपमकरोज्जगतो हिताय॥२॥**

परिभाषावृत्तिकृत् सीरदेवोऽप्याह—**तस्माद् बोद्धव्योऽयं रक्षितः, बोद्धव्याश्च विस्तरा एव रक्षितग्रन्था विद्यन्ते**। पृष्ठ १५।

**अन्या कृतिः**—रक्षितस्याऽन्याकृतिः तन्त्रप्रदीपाख्या काशिकान्यासस्य व्याख्या वर्तते। अनेन महाभाष्यस्यापि काचिद् व्याख्या विरचिता इत्यस्माभिरनेकैः प्रमाणैरनुमितम्। एतद्विषयेऽस्मदीयः 'सं० व्या० शास्त्र का इतिहास' नामा ग्रन्थो द्रष्टव्यः (भाग १, पृष्ठ ४२६-४२८; सं० २०४१)।

## धातुप्रदीप-टीका (११६० वै०)

केनचिदज्ञातनाम्ना विदुषा धातुप्रदीपस्य काचित् टीका विरचिता। इयं टीका सर्वानन्देन स्वीयऽमरकोशटीकासर्वस्वे बहुधा निर्दिष्टा। तेनास्याः कालः १२१६ वैक्रमाब्दात् प्राचीन इति निःसंशयं शक्यते वक्तुम्। अस्माभिरस्याः कालः ११६०—१२१५ वैक्रमाब्दं यावदनुमितः (द्र० सं० व्या० शास्त्रेतिहास भाग १, पृष्ठ४२३; सं० २०४१)।

---

# धातु-प्रदीपस्य विषय-सूची



———

[संशोधनपत्रं पृष्ठभागे द्रष्टव्यम्]

# संशोधन-पत्रम्

| पृष्ठम् | पं० | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| १ | ८ | विशेषोपकारिणीति | विशेषोपकारीणीति |
| १७ | १ | श्चयं | श्चायं |
| ३२ | २० | लुबि कुबि | लुबि तुबि |
| ४४ | २० | विनासः | विनसा |
| ५५ | १३ | ककारेण | चकारेण |
| ७५ | ६ | इचुलुम्प० | ऽर्हचुलुम्प० |
| ९० | ११ | ०च्छान्दसा वित्यर्थः | ०च्छान्दसावित्यर्थः |
| ९८ | २७ | अङेव | सिजेव |
| १०८ | ६ | पञ्चबाणः। क्षिणो० | पञ्चबाणः क्षिणो० |
| १३२ | १ | स्कूनाति स्कूनीते | क्नूनाति क्नूनीते |

अथ

महामहोपाध्यायश्रीमैत्रेयरक्षितविरचितो

# धातुप्रदीपः

मञ्जुघोषप्रसादेन धातूनां वृत्तिमारभे। (१)
बहुशोऽमून् यथा भीमः (२) प्रोक्तवांस्तद्वदागमात् ॥१॥

---

(१) [अत्र टिप्पण्यां सम्पादकेन श्रीशचन्द्रचक्रवर्तिना इत्संज्ञाविधायक-इत्संज्ञाफलबोधक-गणफलनिदर्शकानि संकीर्णानि च सप्तपञ्चाशत् सूत्राणि सवृत्तिकानि निर्दिष्टान्यासन्, तानि पाणिनीयशास्त्राध्येतॄणां तद्वेतॄणां च कृते न विशेषोपकारिणीति कृत्वा निष्काशितानि। अन्याः सर्वाष्टिप्पण्यः पूर्वसम्पादकस्य यथावदत्र मुद्रिताः। यु० मी०]

१. भीमोऽयं पाणिनीयधातुपाठस्य व्याख्यातृविशेषः वैयाकरणः कश्चिद् धातूनामर्थान् भू सत्तायाम् एधँ वृद्धौ अड उद्यमे यम उपरम इत्यादीन् निर्दिदेश। सूत्रकारस्तु भ्वेधँ स्पर्धँ इत्याद्येव पपाठ। एवं हि पूर्वं धातुपाठः स्थितः। तथाहि धातूनां क्रियावाचित्वे भट्टोजिः—"न च या प्रापण इत्याद्यर्थ-निर्देशो नियामकः। तस्यापाणिनीयत्वात्। भीमसेनादयो ह्यर्थं निर्दिदिशुरिति स्मर्य्यते। पाणिनिस्तु भ्वेध इत्याद्यपाठीदिति भाष्यवार्त्तिकयोः स्पष्टम्। किञ्च अभियुक्तैरपि कृतोऽर्थनिर्देशो नार्थान्तरनिवृत्तिपरः। सुखमनुभवतीत्यादावधातुत्वप्रसङ्गात्। उक्तञ्च—

क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः।
प्रयोगात् तेऽनुसर्त्तव्या अनेकार्था हि धातवः ॥१॥

इति। अतएव कुर्द खुर्द गुर्द गुद क्रीडायामेवेत्येवकारः पठ्यते। श्लिष आलिङ्गन (३।१।४६) इत्यादिसूत्राण्यपीह ज्ञापकानि।" इति (शब्दकौस्तुभ १।३।१)।

सुप्रयुक्तत्वात् (३) सत्तालक्षणस्यार्थस्य सर्वधात्वर्थव्यापकत्वेन (४) प्राधान्याद् धातुसंज्ञायां भवतेरनुवादेन च वकारवतो भूप्रभृतिशब्दसन्तानवाचकस्य भूवादिशब्दस्य निपातनात् साधुत्वार्थमजन्तधातुवर्गमुल्लङ्घ्यापि भवतिमेव प्रथमं निर्दिशति—

१. **भू सत्तायाम्।** सतो भावः सत्ता। तत्परं सामान्यमपि भवत्यादिपदैः सत्ता साध्यस्वभावतयोच्यत इति क्रियावचनानां भूवादीनां धातुसंज्ञा विधीयमानास्यापि भवति। कथं पुनर्ज्ञायते भवत्यादिपदैः सत्ता साध्यस्वभावतयोच्यत इति ? साधनानां सन्निधानात्। एकाकिना पदेन क्रमेण कालत्रययुक्ताया-स्तस्या अभिधानात्। कदाचित् क्रियाप्रश्नेऽस्त्यादिभिरुत्तरदानाच्च। धातुसंज्ञाया **धातोः** (३।१।९१) इत्यधिकारे **वर्त्तमाने लट्** (३।२।१२३) इति लट् प्रत्ययः। **शेषात् कर्त्तरि परस्मैपदम्** (१।३।७८) इति परस्मैपदम्भवति। भवति, भवतः, भवन्ति। **कर्त्तरि कर्मव्यतीहारे** (१।३।१४) इत्यात्मनेपदं भवति—व्यतिभवते। **भावकर्मणोः** (१।३।१३) इत्यात्मनेपदम्—भूयते। एवमन्यत्रापि लकारे वेदितव्यम्। लोट्—भवतु, भवताम्, भवन्तु। भावे—भूयताम्। विध्यादौ लिङ्—भवेत्। आशीर्लिङि—भूयात्। लङ्—अभवत्। लुङ्—अभूत्। लृङ्—अभविष्यत्। लिट् बभूव। लृट्—भविष्यति। भावे—भविष्यते, भाविष्यते। कर्मणि—अनुभविष्यते, अनुभाविष्यते। लुट्—भविता, भवितारौ, भवितारः। भावे—भविता भाविता। शतृशानचौ—भवन्, भवन्तौ, भवन्तः, व्यतिभवमानः। तृच्—**आर्धधातुकस्येड्वलादेः** (७।२।३५) इतीट्। भविता, भवितुम्, भवितव्यम्। **अचो यत्** (३।१।९७) भवतीति भव्यः। भवनमिति वा भव्यम्। **भुवो भावे** (३।१।१०७) इति क्यप् प्रत्ययः—देवस्य भावो देवभूयम्। **ओरावश्यके** (३।१।१२५)। इति ण्यत्—भाव्यम्। **भवतेश्चेति वक्तव्यमिति** पक्षे (५) णप्रत्ययः। भवतीति भावः भवः।

---

(३) अप्रयुक्तत्वादिति भिजिगापत्तनमान्द्राजपुस्तकयोः पाठः। स च लिपिकरविभ्रमविजृम्भित एव प्रतिभाति। परन्त्वपरेषु पुस्तकेषु सर्वत्र सुप्रयुक्तत्वादिति हि पाठः। तत्रैकस्मिन् पुस्तके कारणमप्युक्तम्—'प्रचुरप्रयोगविषयत्वाद्' इति। (४) सर्वपदार्थव्यापकत्वेनेति मान्द्राजपुस्तकद्वये पाठः।

(५) इदं काशिकोक्तं वार्त्तिकम्। वार्त्तिकपाठे तु नास्ति। भाव इति

**आशिते भुवः करणभावयोः** (३।२।४५) इति खच्–आशितम्भव ओदनः, आशितम्भवं वर्त्तते। **कर्त्तरि भुवः खिष्णुच्खुकञौ** (३।२।५७) आढ्यम्भविष्णुः, आढ्यम्भावुकः। **भुवश्च** (३।२।१३८) इत्यनुवृत्तौ **ग्लाजिस्थश्च क्स्नु** (३।२।१३९) भवनशीलो भूष्णुः (६)। **लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्** (३।२।१५४) भावुकः। **जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च** (३।२।१५७) इतीनिः परिभवी। **भुवः संज्ञान्तरयोः** (३।२।१७९) इति क्विप्—अधिभूः, परिभूः, आत्मभूः, स्वयम्भूः। प्रतिभूः, दृन्भूः। **विप्रसंभ्यो ड्वसंज्ञायाम्** (३।२।१८०) विभुः, प्रभुः, सम्भुः। **डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम्** (३।२।१८०, वा) शम्भुः। **रञ्जेः क्युन्** (उण्, २।८०) इत्यनुवृत्तौ **भूसूधूभ्रस्जिभ्यश्छन्दसि** (उण्, २।८१) बहुलवचनाद् (३।१।१) क्युन् भाषायामपि। भुवनम्, त्रिभुवनम्। **सृवृभूशुषिमुषिभ्यः कक्** (उण्, ३।४१) भूकम् (७)। **गमेरिनिः** (उण्, ४।६) **आङि णिच्च** (उण् ४।७) **भुवश्च** (उण्, ४।८) भावी। **श्रिणीभुवोऽनुपसर्गे** (३।३।२४) इति घञ्—भवनं भावः। प्रभाव इति तु प्रादिसमासे। **स्त्रियां क्तिन्** (३।३।९४) भूतिः, विभूतिः। **सम्पदादिभ्यः क्विप् वक्तव्यः** (३।१।९४ वा) भावेऽधिकरणे च भूः। **ल्युट् च** (३।३।११५) भवनम्, परिभवनम्। **न भाभूपू** (८।४।३४) इति णत्वनिषेधः। **करणाधिकरणयोश्च** (३।३।११७) भवनम्। **पुंसि संज्ञायां घः प्रायेण** (३।३।११८) प्रायेणेति सर्वोपाधिव्यभिचाराद् भवः। **कर्त्तृकर्मणोश्च भूकृञोः** (३।३।१२७) खल्– ईषदाढ्यम्भवं भवता। **तूष्णीमि भुवः** (३।४।६३) क्त्वाणमुलौ–तूष्णीम्भूयास्ते तूष्णीम्भूत्वा तूष्णीम्भावम्। सन्—**सनि ग्रहगुहोश्च** (७।२।१२) इतीण् निषेधः बुभूषति। यङ्—**गुणो यङ्लुकोः** (७।४।८२) बोभूयते। बोभवीति बोभोति। बोभूत्विति (७।४।६५) (८) ज्ञापकाद् **भूसुवोस्तिङि** (७।३।८८) इति

---

प्राप्तार्थचुरादिण्यन्तादच्। भवः क्षेमे च संसारे सत्तायां प्राप्तिजन्मनोः।

(६) गकारप्रश्लेषात् श्र्युकः किर्तीत्यनेन (७।२।११) नात्रेट्। भुवश्चेत्यनेन (३।२।१३८) च्छन्दसि भविष्णुः। विष्णवे प्रभविष्णवे इति जगत्प्रभोरप्रभविष्णु वैष्णवमित्यादौ तु कवीनां निरङ्कुशत्वात्। (७) भूकं छिद्रमित्यर्थः।

(८) दाधर्त्तीतिसूत्रे (७।४।६५) बोभूत्वित्येव पाठः। स च च्छन्दस्येव। अतो भाषायां भूसुवोस्तिङीति (७।३।८८) गुणनिषेधो न। छन्दस्येव गुण-

गुणप्रतिषेधो यङ्लुकि न भवति । णिच्—भावयति । अबीभवत् । **भू प्राप्तावात्मनेपदी**ति चौरादिकः । तस्य तु सुखं भावयते । । अर्थं भावयते ।

**परस्मैभाष** इति परस्मैपदिनः पूर्वाचार्य्यसंज्ञा । **उदात्त** इति सेटः । सेडयं धातुः । तेन सेट्त्वादस्येडागमो भवति ॥१॥

ततो मङ्गलार्थमात्मनेपदिषूदात्तेष्वेधतिं तवर्गान्त्येषु निर्दिशति—

२. **एधँ वृद्धौ** । एधते । एधाञ्चक्रे । ऐधिष्ट । ऐदिधत् । मा भवानिदिधत् ॥२॥

३. **स्पर्धँ संघर्षे** । स्पर्द्धते । पस्पर्द्धे । स्पर्धनः । स्पर्द्धा ॥३॥

४. **गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च** । गाधते । जगाधे । अजगाधत् । गाधनः ॥४॥

५. **बाधृ लोडने** । बाधते । बाधा । अबाधत । अबबाधत् । बाधनः ॥५॥

६ **णाधृ नाथृ याच्ञोपतापैश्वर्य्याशीःषु** । आद्यो णोपदेशः । नेतरः । तथा चोक्तं(९) **सर्वे नादयो णोपदेशा नृतिनन्दिनर्दिनक्किनाटिनाथृनॄवर्जम्** (महा० ६।१।६५) इति । नाधते । प्रणाधते(१०)। अननाधत् । नाथते । प्रनाथते । नाथः । **आशिषि नाथः** (१।३।२१, वा) इति नियमादन्यत्राशिषः परस्मैपदम् भवति—नाथति । अर्थानुरोधेन धकारान्तप्रकरणे नाथतिरुपदिष्टः ॥६।७॥

७. **दध धारणे** । दधते, दधेते, दधन्ते । देधे, देधाते, देधिरे ॥८॥

८. **स्कुदि आप्रवणे** । स्कुन्दते । चुस्कुन्दे ॥९॥

९. **श्विदि श्वैत्ये** । शैत्य इत्येके । श्विन्दते । शिश्विन्दे ॥१०॥

१०. **वदि अभिवादनस्तुत्योः** । वन्दते । ववन्दे । वन्दारुः । वन्दी । वन्दः । वन्दना ॥११॥

११. **भदि कल्याणे सुखे च** । भन्दते । बभन्देः । भन्दः । भद्रम् । भन्द्यते । **"भद्रः पुंसि वृषे मतः"** ॥१२॥

---

निषेधः । "अत एव यङ्लुग्भाषायामपि सिद्ध" इति भट्टोजिः ।

(९) भाष्य इति शेषः ।

(१०) अन्ये तु नाधतेर्णोपदेशत्वं न स्वीचक्रुः । तन्मते प्रनाधत इति दन्त्य एव ।

१२. **मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु** । मन्दते । ममन्दे । मन्दः । मन्दुरा । मन्दिरम् ।।१३।।

१३. **स्पदि किञ्चिच्चलने** । स्पन्दते । पस्पन्दे । स्पन्दनः ।।१४।।

१४. **क्लिदि परिदेवने** । क्लिन्दते । चिक्लिन्दे । क्लिन्दः । परस्मैपदिषु पाठात् क्लिन्दतीति भवति । उभयपदिष्वयं न पठ्यते । कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदमकर्त्रभिप्राये चात्मनेपदं यथा स्यात् ।।१५।।

१५. **मुद हर्षे** । मोदते । मुमुदे । मुदितमनेन मोदितमनेन । प्रमुदितः प्रमोदितः । मुदित्वा मोदित्वा । मुमुदिषते मुमोदिषते । मोमुद्यते । मुत् । मुद्गः । मुद्रा । मुद्रितः ।।१६।।

१६. **दद दाने** । ददते ददेते ददन्ते । "**प्रसह्य ते साधुधियं ददन्ते**" । ददde ।।१७।।

१७. **ष्वद स्वर्द आस्वादने** । आद्यः षोपदेशः, नेतरः । तदुक्तम् (११) —**अज्दन्त्यपराः सादयः षोपदेशाः ष्मिङ्ष्विदिष्वदिष्वञ्जिष्वपयश्च सृपिसृजिस्तृस्त्यासेक्रुसृवर्जम्** (महा० ६।१।६४) इति । स्वदते । असिष्वदत् । **सः स्विदिस्वदिसहीनाञ्च** (८।३।६२) इति । षत्वस्यापवादः सत्वम् । सिस्वादयिषति । स्वर्दते । सिस्वर्दयिषति । ह्रस्ववत्प्रकरणे स्वर्दतिं निर्दिश्य रेफवत्संयोगान्तप्रकरणे स्वर्दतिं निर्दिष्टवान् । स्वादतिस्तु दीर्घोपधप्रकरणे पृथगेव निर्देष्टव्यः ।।१८, १९।।

१८. **उर्द माने क्रीडायाञ्च** । ऊर्दते । ऊर्दाञ्चक्रे ।।२०।।

१९. **कुर्द खुर्द गुद क्रीडायामेव** । कूर्दते । खूर्दते । **उपधायाञ्च** (८।२।७८) इति दीर्घत्वमत्र कैश्चिन्नेष्यते । तन्मते—उर्दते । कुर्दते । खुर्दते इति । गोदते । गोदः । गोदौ ह्रदौ । क्रीडायामेवेत्येवकारादन्यत्रार्थनिर्देशेष्वनियमोऽनुमीयते (१२) ।।२१-२३।।

२०. **षूद क्षरणे** । सूदते । सुषूदे । सूदिता । मधुसूदनः । नन्द्यादिः ।।२४।।

२१. **ह्लाद अव्यक्ते शब्दे** । ह्लादते । जह्लादे । दुन्दुभिह्लादः ।

---

(११) भाष्य इति शेषः ।

(१२) गुदं इत्यन्ये अधिकं पठन्ति ।

ह्रदो जलाशयविशेषः (१३) पृषोदरादित्वाद् ह्रस्वत्वम् ॥२५॥

२२. **ह्लादी सुखे च** । ह्लादते । जह्लादे । प्रह्लन्नः । प्रह्लन्नवान् । आह्लादः । प्रह्लादः ॥२६॥

२३. **स्वाद आस्वादने** । स्वादते । सस्वादे । असिस्वदत् । सिस्वादयिषति । अषोपदेशोऽयमिति षत्वं न भवति ॥२७॥

२४. **पर्द कुत्सिते शब्दे** । पर्दते । पर्द्दनः (१४) ॥२८॥

२५. **यती प्रयत्ने** । यतते । येते । यत्यम् । यत्तः । यत्तवान् । आयत्तः । यत्नः ॥२९॥

२६. **युतृ जुतृ भासने** । योतते । युयुते । अयुयोतत् । जोतते ॥३०, ३१॥

२७. **विथृ वेथृ याचने** । वेथते । विविथे । वेविथ्यते । अविवेथत् । विथ्यते । वेथते । विवेथे । विवेथ्यते । वेथ्यते ॥३२,३३॥

२८. **श्रथि शैथिल्ये** । श्रन्थते । श्रन्थ्यते । शश्रन्थे । शश्रन्थाते । अशश्रन्थत् । शाश्रन्थ्यते ॥३४॥

२९. **ग्रथि कौटिल्ये** । ग्रन्थते ग्रन्थ्यते । जग्रन्थे । जग्रन्थाते ॥

**श्रन्थ मोचनप्रतिहर्षणयोः, ग्रन्थ सन्दर्भे** इति क्र्यादौ। तयोस्तु श्रथ्नाति । श्रथ्यते । ग्रथ्नाति । ग्रथ्यते इत्यादि रूपम् । श्रन्थ ग्रन्थ सन्दर्भे इति चुरादौ विकल्पितणिच्प्रकरणे । श्रन्थयति श्रन्थति । ग्रन्थयति ग्रन्थति । क्र्यादेश्चुरादेश्चानिदितः । श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति लिटः कित्त्वे सति श्रेथतुः, श्रेथुः । ग्रेथतुः, ग्रेथुरिति भवति । **केचित्** तु वाग्रहणमस्मिन् वाक्ये कुर्वन्ति । तथा च **सञ्जिस्वञ्ज्योः परस्य लिटि** (८।३।११८) इत्यत्र **वृत्तावुक्तं** स्वञ्जेः परस्य लिटो विकल्पेन कित्त्वमिच्छन्तीति । तन्मतेनैतयोरपि पक्षे शश्रन्थतुर्जग्रन्थतुरित्येवं भवति । सर्वत्र **णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणाञ्च** (३।१।८९, वा) इति कर्मकर्तरि यक्चिणोः प्रतिषेधः । श्रन्थते स्वयमेव । श्रथ्नीते । अश्रन्थिष्ट । ग्रन्थते । ग्रथ्नीते । अग्रन्थिष्टः ॥३५॥

---

(१३) अगाधजलाशय इति ङपुस्तके पाठः ।

(१४) कौक्षे कर्दति पर्दते गुदरवे रेषेति वार्के हसे वुक्केति श्वरवे भषश्च हयजे ह्रेषेति हेषेति च । इति केशवः ।

३०. **कत्थ श्लाघायाम्** । कत्थते । विकत्थी । विकत्थनः ॥३६॥

**आत्मनेभाषेत्यात्मनेपदिनां** पूर्वाचार्य्यसंज्ञेयम् । **उदात्ता** इति सेट्त्वार्थमुक्तम् । **अनुदात्तेत** इत्यनुदात्तेत् संज्ञैषामित्यर्थः । तस्य फलम्—**अनुदात्तङित** (१।३।१२) इत्यात्मनेपदम् ।

एवं तवर्गान्तानात्मनेपदिनः परिसमाप्य तवर्गान्ताः परस्मैपदिन उच्यन्ते—

३१. **अत सातत्यगमने** । अतति । आत, आततुः । आता दिशः । **अज्यतिभ्याम्** (उण्, ४।१३२) इञ्—आतिः, स्वातिः । सौवातः । पदातिः (द्र० उ० ४।१३३), अतसी (द्र० उ० ३।११७) ॥३७॥

३२. **चिती संज्ञाने** । चेतति, चेततः । चिचेत । चेतनः । चित्तः । चित्तवान् । चेतिता । चितित्वा चेतित्वा । चिचितिषति चिचेतिषति । चित् । चिद्रूपः । चेतः । **चितेः कणः कश्च** (उण्, ४।१७७) । चिक्कणः । चैक्कण्यम् (१५) ॥३८॥

३३. **च्युतिर् आसेचने** । च्योतति । अच्युतत् अच्योतीत् । च्युतित्वा च्योतित्वा ॥३९॥

३४. **श्च्युतिर् क्षरणे** । श्च्योतति । अश्च्युतत् । अश्च्योतीत् । दन्त्यादिरयमुपदेश इष्यते । मधुश्च्योततीति मधुश्च्युत् **तमाचक्षाणो** (१६) **मधुगिति** यथा स्यादिति । **श्चुतिरित्यप्येके** पठन्ति । **चुतिर् ह्रासन** (१७) इति च । चोतति । अचुतत् अचोतीत् ॥४०॥

३५. **मन्थ विलोडने** । मन्थति । मथ्यते । मथितम् । मन्थनी । क्र्यादिष्वप्ययं पठ्यते– मथ्नाति, मथ्नीतः ॥४१॥

३६. **कुथि पुथि लुथि मथि हिंसासंक्लेशनयोः** (१८) । कुन्थति ।

---

(१५) अविद्यानिद्रयाक्रान्ते जगत्येकः स चेततीति हलायुधः ।

(१६) अत्र माधवः—"एवञ्च वृत्तिन्यासपदमञ्जरीसम्मताकारमैत्रेयादिभिरुक्तम्" इति ।

(१७) अत्र भासन इति वा पाठः । भाषण इत्यन्ये ।

(१८) अत्र क्वचित् मथीत्यस्मात् परं माथीति च पठ्यते । तस्य मान्थति इति रूपं दर्शितम् ।

कुन्थ्यते । पुन्थति । पुन्थ्यते । लुन्थति । लुन्थ्यते । मन्थति । मन्थ्यते । कुन्थ संक्लेश इति क्र्यादौ—कुथ्नाति । कुथ्यते ।।४२-४५।।

३७. **षिधु गत्याम्** । सेधति । सिषेध । अभिषेधति । "द्विषो घ्नन् परिसेधतः" । **सेधतेर्गतौ** (८।३।११३) इति षत्वप्रतिषेधः । प्रतिषेधति पापात् । अनेकार्थत्वादत्राप्रतिषेधः । प्रत्यषेधत् । प्रतिषिषेधिषति । **उदितो वा** (७।२।५६) । सेधित्वा सिद्ध्वा सिधित्वा । **यस्य विभाषा** (७।२।१५) । सिद्धम् । **केचिदस्योकारमनार्षमिच्छन्ति** । तथा च **एकाच उपदेशऽनुदात्ताद्** (७।२।१०) इत्यत्र **वृत्तौ** निष्ठायां सिधितमित्युदाहृतम् ।।४६।।

३८. **षिधू शास्त्रे माङ्गल्ये च** । शासनं शास्त्रम् । सेधति । सिषेध । ऊदित्त्वादिड्विकल्पः । सेधिता सेद्धा । सेधित्वा सिधित्वा सिध्वा । **क्रादिनियमात्** (७।२।१३) प्रत्युज्जीवितस्येटो बलीयस्त्वमिष्यते । तेन **स्वरतिसूतिसूयतिधूञूदितो वा** (७।२।४४) इति प्राप्तस्य विकल्पस्यापवादो नित्यमिडागमो भवति—सिषिधिव, सिषिधिम । अल्पत्वाद्धकारान्तयोर्दकारान्तेभ्यः पूर्वं निर्देशः । प्रथमं हि लघुरुपदिश्यते ।।४७।।

३९. **खादृ भक्षणे** । खादति । चखाद । अचखादत् ।।४८।।

४०. **खद स्थैर्य्ये हिंसायाञ्च** । खदति । खदिरः । यवखदा । (१९) ।।४९।।

४१. **बद स्थैर्य्ये** । वदति । ववाद बेदतुः बेदुः । बदरम् बदरीकुणः (२०) ।।५०।।

४२. **गद व्यक्तायां वाचि** । गदति । प्रणिगदति । प्रण्यगदत् । गद्यम् । प्रगाद्यमिति ण्यति । निगादः निगदः । अनुगदः ।।५१।।

४३. **रद विलेखने** । रदति । रदः । रदनः ।।५२।।

४४. **णद अव्यक्ते शब्दे** । नदति । प्रणदति । प्रणिनदति । निनदः निनादः । पचादिषु पठचते । तत्सामर्थ्याददन्तादपि **टिड्ढा** (४।१।

---

(१९) यवास्तिष्ठन्त्यत्रेति पुंसि घः । यवानां संग्रहस्थानमित्यर्थः । मर्द्दनस्थानमित्येके ।

(२०) सद्विद्या वदति क्षितौ इति । स्थिरीभवतीत्यर्थः । ओष्ठ्यादिरयम् ।

१५) इति ङीप्। नदी। शैषिकेषु **नद्यादिभ्यो ढक्** (४।२।९७)। नद्यां भवं नादेयं जलम्। **गोदावर्य्याश्च नद्याश्चेत्यनेनाच्** समासान्तः। पञ्चनदम्। **नदीपौर्णमासी** (५।४।११०) इत्यादिना-व्ययीभावे टच्। उपनदम्। परिनदनमिति क्षुभ्नादिः ॥५३॥

४५. **अर्द गतौ याचने च**। अर्दति। आर्दिदत्। अर्दिदिषति। अभ्यर्णा शरत् (२१) ॥५४॥

४६. **नर्द गर्द शब्दे**। नर्दति। प्रनर्दति। अणोपदेशोऽयमिति णत्वं न भवति। गर्दति। जगर्द। गर्दिता। गर्दभः। **कृशृशलिकलिगर्दिभ्योऽभच्**। (उण्, ३।१२२) ॥५५।५६॥

४७. **तर्द हिंसायाम्**। तर्दति। ततर्द। पूर्वकेण हिंसार्थधातुना सहास्य निर्देशो न कृतः। रेफवत्संयोगान्तप्रकरणात्। एवमन्यत्रापि व्यतिक्रमे हेतुर्वेदितव्यः ॥५७॥

४८. **कर्द कुत्सिते शब्दे**। कर्दति। कर्दः। कर्दनः। कर्दमः ॥५८।

४९. **खर्द दन्दशूके**। दन्दशूको दंशनशीलः स्वभावभूतगर्हितदंशन-क्रियाकर्त्ता। अनेन तत्समवेता स्वभावभूतगर्हितदंशनक्रिया लक्ष्यते। धातोः क्रियावचनत्वात्। एवमन्यत्रापि द्रव्यनिर्द्देशे क्रिया लक्ष्यते। दन्दंशन इत्येतन्नोक्तम्। ताच्छील्यार्थस्य संग्रहो (२२) न स्यादिति। खर्दति। चखर्द ॥५९॥

५०. **अति अदि बन्धने**। अन्तति। अन्तः। अन्दति। आनन्द। आनन्दतुः। अन्दिदिषति। अन्दूः। अन्दुकः ॥६०,६१॥

५१. **इदि परमैश्वर्य्ये**। इन्दति। इन्दाञ्चकार। इन्दिदिषति। इन्द्रः। **इन्द्रवरुण** (४।१।४९)इत्यादिना। ङीषानुकौ। इन्द्राणी। **अत इञ्** (४।१।९५) ऐन्द्रिः। **सास्य देवता** (४।२।२४) ऐन्द्रं हविः। **छ च** (४।२।२८), **महेन्द्राद् घाणौ च** (४।२।२९)। महेन्द्रीयम् महेन्द्रियम् माहेन्द्रम्। **तस्येदम्** (४।३।१२०) इत्यण्—ऐन्द्रं धनुः। **शिशुक्रन्द** (४।३।८८) इत्यादिना छः इन्द्रजननमधिकृत्य कृतो

(२१) शरद्घनं नार्दति चातकोऽपीति रघुकाव्ये। याचने चेति चकारस्यानुक्तसमुच्चयार्थत्वात् पीडायामपीत्येके। तथा च रक्षः सहस्राणि चतुर्द्दशार्दीरिति प्रयोगः।

(२२) परिग्रह इति क्वचित् पाठः।

ग्रन्थ इन्द्रजननीयः। **इन्द्रियमिन्द्रलिङ्ग** (५।२।९३) इत्यादौ निपात्यते। इन्द्रियम् ॥६२॥

**५२. बिदि अवयवे**। बिन्दति। बिबिन्द। अस्यापि **विन्दुरिच्छुः** (३।२।१६९) इति निपातनमिच्छन्ति। जयादित्यस्तु विद ज्ञान इत्यस्यैव तन्निपातनमाह। (२३) ॥६३॥

**५३. णिदि कुत्सायाम्**। निन्दति। प्रणिन्दति। निन्दकः। निन्दा। अस्य नोपदेशत्वं वैचित्र्यार्थम्। **वा निंसनिक्षनिन्दाम्** (८।४।३३) इति विकल्पविधानात्। केचित्तु कृति प्रत्यये विकल्पमिच्छन्ति। तिङि पुनर् **उपसर्गादसमासेऽपि** (८।४।१४) इत्यादिना णोपदेशत्वान्नित्यमेव णत्वं भवतीति व्याचक्षते। भट्टिकाव्ये तु तिङ्यपि विकल्पो दर्शितः—"**प्रणिन्दिष्यति नो भूयः**" इति ॥६४॥

**५४. टुनदि समृद्धौ**। नन्दति। प्रनन्दति। नन्दकः। नन्दनम्। नन्दथुः। नन्दयतीति नन्दनः। पचाद्यच्। नन्दः। स्त्रियां नन्दा। घञ्।। आनन्दः। आवश्यके णिनिः। नन्दी। (२४) ॥६५॥

**५५. चदि आह्लादने दीप्तौ च**। चन्दति। चन्द्रः। चन्दनम्। चन्दिरः। चन्द्रिका। (२५) ॥६६॥

**५६. त्रदि चेष्टायाम्**। त्रन्दति। तत्रन्द ॥६७॥

**५७. कदि क्रदि क्लदि आह्वाने रोदने च**। कन्दति। चकन्द। कन्दः। बहुलवचनादरन्—कन्दरः। कन्दरा। कन्दलः। गौरादित्वात् कन्दली। क्रन्दति। चक्रन्दः। आक्रन्दः। क्लन्दति। चक्लन्द। (२६) ॥६८-७०॥

---

(२३) अत्र गडि वदनैकदेश इति क्वचिदपपाठः। यतो दकारान्तेषु डकारान्तस्य पाठः सन्दिग्धः। गडि वदनैकदेशः इति माधवभट्टोजिग्रन्थेष्वपि नास्ति। अतो मैत्रेयमतेऽपि अयं नास्ति एव।

(२४) नन्दते च कुलं पुंसामिति देवीमाहात्म्ये। आर्षोऽयं प्रयोगः। गणकार्य्यानित्यत्वादिति रमानाथस्य मनोरमा। विशिष्य सा भीमनरेन्द्रनन्दनेति नैषधे।

(२५) किरचि चन्दिरः। चन्दिरो दीपचन्द्रयोरिति। चन्द्रोऽस्यास्तीति ठनि चन्द्रिका कौमुदी।

(२६) क्लदि इत्यत्र कुदीत्येके पठन्ति। तन्मते कुन्दति। चुकुन्द। कुन्दः।

**५८. क्लिदि परिदेवने ।** क्लिन्दति । चिक्लिन्द । क्लिन्दितः । क्लिन्न इति तु **क्लिदू आर्द्रीभाव** इत्यस्य क्लिद्यते रूपम् ॥७१॥

**५९. शुन्ध शुद्धौ ।** शुन्धति । शुशुन्ध । शुधितः । शुद्धिः शुद्ध इति तु शुध्यते रूपम् (२७) । संयोगान्तप्रकरणानुरोधेन पूर्वं धकारान्तप्रकरणे नायं निर्दिष्टः ॥७२॥

**परस्मैभाषा उदात्ता उदात्तेत** इति । उदात्त इत्संज्ञक एषामित्यर्थः । एतेनानुदात्त इत्संज्ञक एषां नास्तीति आत्मनेपदमेषां न भवतीत्युक्तम् ।

मङ्गलानुरोधेन तवर्गान्तानुपदिश्य प्रथमभाविनः कवर्गान्तानुपदिशति—

**६०. शीकृ सेचने ।** शीकते । शिशीके । अशिशीकत् । शीका । शीकरः । **अट्टाट्टाशीक** (३।१।१७, वा) इत्यादिना क्यङ् । शीकायते ॥ ७३॥

**६१. लोकृ दर्शने ।** लोकते । अलुलोकत् । लोकः ।

> **"समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ।**
> **ऊर्ध्वं दमाच्च देहाच्च लोकोत्तरपदस्य च ॥१॥**
> (४।३।६०, वा)

इति ठञ् । इह लोके भवमैहलौकिकम् । **अनुशतिकादित्वाद्** (द्र० ७।३।२०) उभयपदवृद्धिः ।.७४॥

**६२. श्लोकृ संघाते ।** श्लोकते । अशुश्लोकत् । श्लोकः ॥७५॥

**६३. द्रेकृ ध्रेकृ शब्दोत्साहयोः ।** द्रेकते । अदिद्रेकत् । ध्रेकते । अदिध्रेकत् ॥७६,७७॥

**६४. रेकृ शङ्कायाम् ।** रेकते । अरिरेकत् । रेका । रेकः ॥७८।

**६५. सेकृ स्रेकृ श्रेकृ स्रकि श्रकि श्लकि गत्यर्थाः ।** सेकते । सिसेके । असिसेकत् । स्रेकते । श्रेकते । [स्रङ्कते ।] श्रङ्कते । श्रङ्क्यते । श्लङ्कते । श्लङ्क्यते । (२८) । ७९—८४॥

---

(२७) योगान् शुन्धति सत्येनेति हलायुधः । सन्ध्यया शुन्धति द्विज इति ।

(२८) माधवभट्टोजिग्रन्थयोः श्रेकृ इति नास्ति ।

६६. **शकि शङ्कायाम्** । शङ्कते । शशङ्के । शङ्क्यते । शङ्का ।८५

६७. **अकि लक्षणे** । अङ्कते । आनङ्के । अङ्क्यते । अङ्कः । **मन्दिवासिमथि** (उण्, १।३८) इत्यादिना उरच्—अङ्कुरः ।।८६।।

६८. **वकि कौटिल्ये** । वङ्कते । ववङ्के । अववङ्कत् । वङ्क्यते । वङ्कः ।।८७।।

६९. **मकि मण्डने** । मङ्कते । युच् मङ्कनः ।।८८।।

७०. **कक लौल्ये** । ककते । चकके । काकयति । काकः ।।८९।।

७१. **कुक वृक आदाने** । कोकते । चुकुके । कोकः । वर्कते । वर्कः । वरीवृक्यते । **इगुपधज्ञाप्रीकिरः कः** (३।१।१३५) वृकः । स्वार्थे **वृकाट्टेण्यण्** (५।३।११५) वार्केण्यः । वर्करो मेषशावकः ।।९०,९१।।

७२. **चक तृप्तौ प्रतीघाते च** । चकते । चेके । चकितः । **कठिचकिभ्यामोरच्** (उण्, १।६४) चकोरः ।।९२।।

७३. **ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क तिकृ टिकृ टीकृ रघि लघि गत्यर्थाः** । कङ्कते । कङ्कः । वङ्कते । वङ्कः । श्वङ्कते । त्रङ्कते । ढौकते । अडुढौकत् । त्रौकते । अतुत्रौकत् । ष्वक्वते । ष्वाष्वक्व्यते । **सुब्धातुष्ठिवुष्वक्वतीनां प्रतिषेधो वक्तव्य** (६।१।६४) इति धात्वादेः षकारस्य सत्वप्रतिषेधात् सत्वन्न भवति । (२९) वस्कते । मस्कते । तेकते । अतितेकत् । तिकः । तिकादित्वात् फिञ्—तैकायनिः । टेकते । अटिटेकत् । टीकते । अटिटीकत् । टीका । रङ्घते । ररङ्घे । लङ्घते । ललङ्घे । **लङ्घिबंह्योर्नलोपश्च** (उण्, १।२९) इत्युप्रत्ययः—लघुः । **बालमूललघ्वङ्गुलीनां वा लो रत्वमापद्यत** (८।२।१८ वा) इति रपक्षे रघुः ।।९३—१०६।।

७४. **अघि वघि मघि गत्याक्षेपे** । अङ्घते । आनङ्घे । वङ्घते । ववङ्घे । विवङ्घिषते । मङ्घते ।

७५. **मघि कैतवे च** । पूर्वमस्य पाठः कैतवार्थस्यान्वाचिततत्वद्योतनाय । (३०) ।।१०७—१०९।।

---

(२९) ष्वष्क इति पाठान्तरम् । तेन ष्वष्कते । षाष्वष्क्यत इति ।

(३०) कैतवार्थस्य समुच्चिततत्वद्योतनायेति ङपुस्तके पाठः ।

७६. **राघृ लाघृ द्राघृ सामर्थ्ये**। राघते। रराघे। अरराघत्। लाघते। उल्लाघः।

७७. **द्राघृ आयामे च**। द्राघते ॥११०-११२॥

७८. **श्लाघृ कत्थने**। श्लाघते। श्लाघा। ॥११३॥

**इति आत्मनेभाषा उदात्ता अनुदात्तेतः।**

**अथ कवर्गान्ताः परस्मैपदिनः—**

७९. **फक्क नीचैर्गतौ**। फक्कति। पफक्क। फक्कः। फक्किका (३१) ॥११४॥

८०. **तक हसने**। तकति। तक्यम् ॥११५॥

८१. **तकि कृच्छ्रजीवने**। तङ्कति। आतङ्कः ॥११६॥

८२. **शुक गतौ**। शोकति। शुकः। शुक्रः। **शुक्राद् घन्** (४।२।२६) शुक्रो देवतास्य शुक्रियं हविः। (३२) ॥११७॥

८३. **बुक्क भषणे**। बुक्कति श्वा ॥११८॥

८४. **कक्ख हसने**। कक्खति। **शकादिभ्योऽटन्** (उण्, ४।८२) कक्खटः। (३३) ॥११९॥

८५. **ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः**। ओखति। ओखाञ्चकार। प्रोखति। मा भवानुचिखत्। राखति। अरराखत्। लाखति। अललाखत्। द्राखति। अदद्राखत्। ध्राखति। अदध्राखत् ॥१२०-१२४॥

८६. **शाखृ श्लाखृ व्याप्तौ**। शाखति। अशशाखत्। शाखा। श्लाखति।१२५-१२६॥

८७. **उख नख वख मख रख लख वखि लखि इखि ईखि वल्ग रगि वगि लगि अगि मगि तगि त्वगि त्रगि श्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः**। ओखति। प्रोखति। उवोख। **अभ्यासस्यासवर्णे** (६।४।७८) इतीयङुवङोर्विधानसामर्थ्याद् हलादिशेषो न भवति। ऊखतुः। अत्रैकादेशस्य पूर्वं प्रत्यन्तवत्वादभ्यासग्रहणेन ग्रहणे सति

(३१) फणिभाषितभाष्यफक्किकाविषमाकुण्डलनामवापितेति नैषधे।

(३२) अयं माधवभट्टोजिभ्यां न दत्तः।

(३३) भट्टोजिमते कख हसने। प्रनिकखति। एवं माधवश्च।

ह्लदो जलाशयविशेषः (१३) पृषोदरादित्वाद् ह्रस्वत्वम् ॥२५॥

२२. **ह्लादी सुखे च** । ह्लादते । जह्लादे । प्रह्लन्नः । प्रह्लन्नवान् । आह्लादः । प्रह्लादः ॥२६॥

२३. **स्वाद आस्वादने** । स्वादते । सस्वादे । असिस्वदत् । सिस्वादयिषति । अषोपदेशोऽयमिति षत्वं न भवति ॥२७॥

२४. **पर्द कुत्सिते शब्दे** । पर्दते । पर्द्दनः (१४) ॥२८॥

२५. **यती प्रयत्ने** । यतते । येते । यत्यम् । यत्तः । यत्तवान् । आयत्तः । यत्नः ॥२९॥

२६. **युतृ जुतृ भासने** । योतते । युयुते । अयुयोतत् । जोतते ॥३०, ३१॥

२७. **विथृ वेथृ याचने** । वेथते । विविथे । वेविथ्यते । अविवेथत् । विथ्यते । वेथते । विवेथे । विवेथ्यते । वेथ्यते ॥३२,३३॥

२८. **श्रथि शैथिल्ये** । श्रन्थते । श्रन्थ्यते । शश्रन्थे । शश्रन्थाते । अशश्रन्थत् । शाश्रन्थ्यते ॥३४॥

२९. **ग्रथि कौटिल्ये** । ग्रन्थते ग्रन्थ्यते । जग्रन्थे । जग्रन्थाते ॥

**श्रन्थ मोचनप्रतिहर्षणयोः, ग्रन्थ सन्दर्भे** इति क्र्यादौ । तयोस्तु श्रथ्नाति । श्रथ्यते । ग्रथ्नाति । ग्रथ्यते इत्यादि रूपम् । श्रन्थ ग्रन्थ सन्दर्भे इति चुरादौ विकल्पितणिच्प्रकरणे । श्रन्थयति श्रन्थति । ग्रन्थयति ग्रन्थति । क्र्यादेश्चुरादेश्चानिदितः । श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति लिटः कित्त्वे सति श्रेथतुः, श्रेथुः । ग्रेथतुः, ग्रेथुरिति भवति । **केचित्** तु वाग्रहणमस्मिन् वाक्ये कुर्वन्ति । तथा च **सदिस्वञ्ज्योः परस्य लिटि** (८।३।११८) इत्यत्र **वृत्तावुक्तं** स्वञ्जेः परस्य लिटो विकल्पेन कित्त्वमिच्छन्तीति । तन्मतेनैतयोरपि पक्षे शश्रन्थतुर्जग्रन्थतुरित्येवं भवति । सर्वत्र **णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणाञ्च** (३।१।८९, वा) इति कर्मकर्तरि यक्चिणोः प्रतिषेधः । श्रन्थते स्वयमेव । श्रथ्नीते । अश्रन्थिष्ट । ग्रन्थते । ग्रथ्नीते । अग्रन्थिष्टः ॥३५॥

---

(१३) अगाधजलाशय इति ङपुस्तके पाठः ।

(१४) कौक्षे कर्दति पर्दते गुदरवे रेषेति वार्के हसे वुक्केति श्वरवे भषश्च हयजे ह्रेषेति हेषेति च । इति केशवः ।

३०. **कत्थ श्लाघायाम्** । कत्थते । विकत्थी । विकत्थनः ॥३६॥

**आत्मनेभाषे**त्यात्मनेपदिनां पूर्वाचार्य्यसंज्ञेयम् । **उदात्ता** इति सेट्-त्वार्थमुक्तम् । **अनुदात्तेत** इत्यनुदात्तेत् संज्ञैषामित्यर्थः । तस्य फलम्— **अनुदात्तङित** (१।३।१२) इत्यात्मनेपदम् ।

एवं तवर्गान्तानात्मनेपदिनः परिसमाप्य तवर्गान्ताः परस्मैपदिन उच्यन्ते—

३१. **अत सातत्यगमने** । अतति । आत, आततुः । आता दिशः । **अज्यतिभ्याम्** (उण्, ४।१३२) इञ्—आतिः, स्वातिः । सौवातः । पदातिः (द्र० उ० ४।१३३), अतसी (द्र० उ० ३।११७) ॥३७॥

३२. **चिती संज्ञाने** । चेतति, चेततः । चिचेत । चेतनः । चित्तः । चित्तवान् । चेतिता । चितित्वा चेतित्वा । चिचितिषति चिचेतिषति । चित् । चिद्रूपः । चेतः । **चितेः कणः कश्च** (उण्, ४।१७७) । चिक्कणः । चैक्कण्यम् (१५) ॥३८॥

३३. **च्युतिर् आसेचने** । च्योतति । अच्युतत् अच्योतीत् । च्युतित्वा च्योतित्वा ॥३९॥

३४. **श्च्युतिर् क्षरणे** । श्च्योतति । अश्च्युतत् । अश्च्योतीत् । दन्त्यादिरयमुपदेश इष्यते । मधुश्च्योततीति मधुश्च्युत् **तमाचक्षाणो** (१६) **मधुगि**ति यथा स्यादिति । **श्चुतिरि**त्यप्ये**के** पठन्ति । **चुतिर् हासन** (१७) इति च । चोतति । अचुतत् अचोतीत् ॥४०॥

३५. **मन्थ विलोडने** । मन्थति । मथ्यते । मथितम् । मन्थनी । क्र्यादिष्वप्ययं पठ्यते– मथ्नाति, मथ्नीतः ॥४१॥

३६. **कुथि पुथि लुथि मथि हिंसासंक्लेशनयोः** (१८) । कुन्थति ।

---

(१५) अविद्यानिद्रयाक्रान्ते जगत्येकः स चेततीति हलायुधः ।

(१६) अत्र माधवः—"एवञ्च वृत्तिन्यासपदमञ्जरीसम्मताकारमैत्रेयादिभिरुक्तम्" इति ।

(१७) अत्र भासन इति वा पाठः । भाषण इत्यन्ये ।

(१८) अत्र क्वचित् मथीत्यस्मात् परं माथीति च पठ्यते । तस्य मान्थति इति रूपं दर्शितम् ।

कुन्थ्यते । पुन्थति । पुन्थ्यते । लुन्थति । लुन्थ्यते । मन्थति । मन्थ्यते । कुन्थ संक्लेश इति क्र्यादौ—कुथ्नाति । कुथ्यते ॥४२-४५॥

३७. **षिधु गत्याम्** । सेधति । सिषेध । अभिषेधति । "द्विषो घ्नन् परिसेधत:" । **सेधतेर्गतौ** (८।३।११३) इति षत्वप्रतिषेधः । प्रतिषेधति पापात् । अनेकार्थत्वादत्राप्रतिषेधः । प्रत्यषेधत् । प्रतिषिषेधिषति । **उदितो वा** (७।२।५६) । सेधित्वा सिद्ध्वा सिधित्वा । **यस्य विभाषा** (७।२।१५) । सिद्धम् । केचिदस्योकारमनार्षमिच्छन्ति । तथा च **एकाच उपदेशऽनुदात्तात्** (७।२।१०) इत्यत्र **वृत्तौ** निष्ठायां सिधितमित्युदाहृतम् ॥४६॥

३८. **षिधू शास्त्रे माङ्गल्ये च** । शासनं शास्त्रम् । सेधति । सिषेध । ऊदित्त्वादिड्विकल्पः । सेधिता सेद्धा । सेधित्वा सिधित्वा सिध्वा । **क्रादिनियमात्** (७।२।१३) प्रत्युज्जीवितस्येटो बलीयस्त्वमिष्यते । तेन **स्वरतिसूतिसूयतिधूञूदितो वा** (७।२।४४) इति प्राप्तस्य विकल्पस्यापवादो नित्यमिडागमो भवति—सिषिधिव, सिषिधिम । अल्पत्वाद्धकारान्तयोर्दकारान्तेभ्यः पूर्वं निर्देशः । प्रथमं हि लघुरुपदिश्यते ॥४७॥

३९. **खादृ भक्षणे** । खादति । चखाद । अचखादत् ॥४८॥

४०. **खद स्थैर्य्ये हिंसायाञ्च** । खदति । खदिरः । यवखदा । (१९) ॥४९॥

४१. **बद स्थैर्य्ये** । बदति । बबाद बेदतुः बेदुः । बदरम् बदरीकुणः (२०) ॥५०॥

४२. **गद व्यक्तायां वाचि** । गदति । प्रणिगदति । प्रण्यगदत् । गद्यम् । प्रगाद्यमिति ण्यति । निगादः निगदः । अनुगदः ॥५१॥

४३. **रद विलेखने** । रदति । रदः । रदनः ॥५२॥

४४. **णद अव्यक्ते शब्दे** । नदति । प्रणदति । प्रणिनदति । निनदः निनादः । पचादिषु पठ्यते । तत्सामर्थ्याददन्तादपि **टिड्ढा** (४।१।

---

(१९) यवास्तिष्ठन्त्यत्रेति पुंसि घः । यवानां संग्रहस्थानमित्यर्थः । मर्द्दनस्थानमित्येके ।

(२०) सद्विद्या बदति क्षितौ इति । स्थिरीभवतीत्यर्थः । ओष्ठ्यादिरयम् ।

१५) इति ङीप्। नदी। शैषिकेषु **नद्यादिभ्यो ढक्** (४।२।९७)। नद्यां भवं नादेयं जलम् । **गोदावर्य्याश्च नद्याश्चेत्यनेनाच्** समासान्तः। पञ्चनदम् । **नदीपौर्णमासी** ( ५।४।११० ) इत्यादिनाव्ययीभावे टच्। उपनदम्। परिनदनमिति क्षुभ्नादिः ॥५३॥

४५. **अर्द्द गतौ याचने च**। अर्दति। आर्दिदत्। अर्दिदिषति। अभ्यर्णा शरत् (२१) ॥५४॥

४६. **नर्द गर्द शब्दे**। नर्दति। प्रनर्दति। अणोपदेशोऽयमिति णत्वं न भवति। गर्दति। जगर्द्द। गर्दिता। गर्द्दभः। **कृशृशलिकलिगर्द्दिभ्योऽभच्**। (उण्, ३।१२२) ॥५५।५६॥

४७. **तर्द हिंसायाम्**। तर्दति। ततर्द्द। पूर्वकेण हिंसार्थधातुना सहास्य निर्देशो न कृतः। रेफवत्संयोगान्तप्रकरणात्। एवमन्यत्रापि व्यतिक्रमे हेतुर्वेदितव्यः ॥५७॥

४८. **कर्द कुत्सिते शब्दे**। कर्द्दति। कर्द्दः। कर्द्दनः। कर्दमः ॥५८।

४९. **खर्द दन्दशूके**। दन्दशूको दंशनशीलः स्वभावभूतगर्हितदंशनक्रियाकर्त्ता। अनेन तत्समवेता स्वभावभूतगर्हितदंशनक्रिया लक्ष्यते। धातोः क्रियावचनत्वात्। एवमन्यत्रापि द्रव्यनिर्द्देशे क्रिया लक्ष्यते। दन्दंशन इत्येतन्नोक्तम्। ताच्छील्यार्थस्य संग्रहो (२२) न स्यादिति। खर्दति। चखर्द्द ॥५९॥

५०. **अति अदि बन्धने**। अन्तति। अन्तः। अन्दति। आनन्द। आनन्दतुः। अन्दिदिषति। अन्दूः। अन्दुकः ॥६०,६१॥

५१. **इदि परमैश्वर्य्ये**। इन्दति। इन्दाञ्चकार। इन्दिदिषति। इन्द्रः। **इन्द्रवरुण** (४।१।४९)इत्यादिना। ङीषानुकौ। इन्द्राणी। **अत इञ्** (४।१।९५) ऐन्द्रिः। **सास्य देवता** (४।२।२४) ऐन्द्रं हविः। **छ च** (४।२।२८), **महेन्द्राद् घाणौ च** (४।२।२९)। महेन्द्रीयम् महेन्द्रियम् माहेन्द्रम्। **तस्येदम्** ( ४।३।१२० ) इत्यण्—ऐन्द्रं धनुः। **शिशुक्रन्द** ( ४।३।८८ ) इत्यादिना छः इन्द्रजननमधिकृत्य कृतो

---

(२१) शरद्घनं नार्दति चातकोऽपीति रघुकाव्ये। याचने चेति चकारस्यानुक्तसमुच्चयार्थत्वात् पीडायामपीत्येके। तथा च रक्षः सहस्राणि चतुर्द्दशार्दीरिति प्रयोगः।

(२२) परिग्रह इति क्वचित् पाठः।

ग्रन्थ इन्द्रजननीयः । **इन्द्रियमिन्द्रलिङ्ग** (५।२।९३) इत्यादौ निपात्यते । इन्द्रियम् ।।६२।।

**५२. बिदि अवयवे** । बिन्दति । बिबिन्द । अस्यापि **बिन्दुरिच्छुः** (३।२।१६९) इति निपातनमिच्छन्ति । जयादित्यस्तु विद ज्ञान इत्यस्यैव तन्निपातनमाह । (२३) ।।६३।।

**५३. णिदि कुत्सायाम्** । निन्दति । प्रणिन्दति । निन्दकः । निन्दा । अस्य नोपदेशत्वं वैचित्र्यार्थम् । **वा निंसनिक्षनिन्दाम्** (८।४।३३) इति विकल्पविधानात् । केचित्तु कृति प्रत्यये विकल्पमिच्छन्ति । तिङि पुनर् **उपसर्गादसमासेऽपि** ( ८।४।१४ ) इत्यादिना णोपदेशत्वान्नित्यमेव णत्वं भवतीति व्याचक्षते । भट्टिकाव्ये तु तिङ्यपि विकल्पो दर्शितः--"**प्रणिन्दिष्यति नो भूयः**" इति ।।६४।।

**५४. टुनदि समृद्धौ** । नन्दति । प्रनन्दति । नन्दकः । नन्दनम् । नन्दथुः । नन्दयतीति नन्दनः । पचाद्यच् । नन्दः । स्त्रियां नन्दा । घञ् । । आनन्दः । आवश्यके णिनिः । नन्दी । (२४) ।।६५।।

**५५. चदि आह्लादने दीप्तौ च** । चन्दति । चन्द्रः । चन्दनम् । चन्दिरः । चन्द्रिका । (२५) ।।६६।।

**५६. त्रदि चेष्टायाम्** । त्रन्दति । तत्रन्द ।।६७।।

**५७. कदि क्रदि क्लदि आह्वाने रोदने च** । कन्दति । चकन्द । कन्दः । बहुलवचनादरन्– कन्दरः । कन्दरा । कन्दलः । गौरादित्वात् कन्दली । क्रन्दति । चक्रन्दः । आक्रन्दः । क्लन्दति । चक्लन्द ।(२६) ।।६८-७०।।

---

(२३) अत्र गडि वदनैकदेश इति क्वचिदपपाठः । यतो दकारान्तेषु डकारान्तस्य पाठः सन्दिग्धः । गडि वदनैकदेशः इति माधवभट्टोजिग्रन्थेष्वपि नास्ति । अतो मैत्रेयमतेऽपि अयं नास्ति एव ।

(२४) नन्दते च कुलं पुंसामिति देवीमाहात्म्ये । आर्षोऽयं प्रयोगः । गणकार्य्यानित्यत्वादिति रमानाथस्य मनोरमा । विशिष्य सा भीमनरेन्द्रनन्दनेति नैषधे ।

(२५) किरचि चन्दिरः । चन्दिरो दीपचन्द्रयोरिति । चन्द्रीऽस्यास्तीति ठनि चन्द्रिका कौमुदी ।

(२६)क्लदि इत्यत्र कुदीत्येके पठन्ति । तन्मते कुन्दति । चुकुन्द । कुन्दः ।

**५८. क्लिदि परिदेवने।** क्लिन्दति। चिक्लिन्द। क्लिन्दितः। क्लिन्न इति तु **क्लिदू आर्द्रीभाव** इत्यस्य क्लिद्यते रूपम् ॥७१॥

**५९. शुन्ध शुद्धौ।** शुन्धति। शुशुन्ध। शुधितः। शुद्धिः शुद्ध इति तु शुध्यते रूपम् (२७)। संयोगान्तप्रकरणानुरोधेन पूर्वं धकारान्तप्रकरणे नायं निर्दिष्टः ॥७२॥

**परस्मैभाषा उदात्ता उदात्तेत** इति। उदात्त इत्संज्ञक एषामित्यर्थः। एतेनानुदात्त इत्संज्ञक एषां नास्तीति आत्मनेपदमेषां न भवतीत्युक्तम्।

मङ्गलानुरोधेन तवर्गान्तानुपदिश्य प्रथमभाविनः कवर्गान्तानुपदिशति—

**६०. शीकृ सेचने।** शीकते। शिशीके। अशिशीकत्। शीका। शीकरः। **अट्टाट्टाशीक** (३।१।१७, वा) इत्यादिना क्यङ्। शीकायते ॥ ७३॥

**६१. लोकृ दर्शने।** लोकते। अलुलोकत्। लोकः।

**"समानस्य तदादेश्च अध्यात्मादिषु चेष्यते।**
**ऊद्ध्र्वं दमाच्च देहाच्च लोकोत्तरपदस्य च ॥१॥**
(४।३।६०, वा)

इति ठञ्। इह लोके भवमैहलौकिकम्। **अनुशतिकादित्वाद्** (द्र० ७।३।२०) उभयपदवृद्धिः ॥७४॥

**६२. श्लोकृ संघाते।** श्लोकते। अशुश्लोकत्। श्लोकः ॥७५॥

**६३. द्रेकृ ध्रेकृ शब्दोत्साहयोः।** द्रेकते। अदिद्रेकत्। ध्रेकते। अदिध्रेकत् ॥७६,७७॥

**६४. रेकृ शङ्कायाम्।** रेकते। अरिरेकत्। रेका। रेकः ॥७८॥

**६५. सेकृ स्रेकृ श्रेकृ स्रकि श्रकि श्लकि गत्यर्थाः।** सेकते। सिसेके। असिसेकत्। स्रेकते। श्रेकते। [स्रङ्कते।] श्रङ्कते। श्रङ्क्यते। श्लङ्कते। श्लङ्क्यते। (२८)। ७९—८४॥

---

(२७) योगान् शुन्धति सत्येनेति हलायुधः। सन्ध्यया शुन्धति द्विज इति।

(२८) माधवभट्टोजिग्रन्थयोः श्रेकृ इति नास्ति।

६६. **शकि शङ्कायाम्** । शङ्कते । शशङ्के । शङ्क्यते । शङ्का ।८५

६७. **अकि लक्षणे** । अङ्कते । आनङ्के । अङ्क्यते । अङ्कः । **मन्दिवाशिमथि** (उण्, १।३८) इत्यादिना उरच्—अङ्कुरः ।।८६।।

६८. **वकि कौटिल्ये** । वङ्कते । ववङ्के । अववङ्कत् । वङ्क्यते । वङ्कः ।।८७।।

६९. **मकि मण्डने** । मङ्कते । युच् मङ्कनः ।।८८।।

७०. **कक लौल्ये** । ककते । चकके । काकयति । काकः ।।८९।।

७१. **कुक वृक आदाने** । कोकते । चुकुके । कोकः । वर्कते । वर्कः । वरीवृक्यते । **इगुपधज्ञाप्रीकिरः कः** (३।१।१३५) वृकः । स्वार्थे **वृकाट्टेण्यण्** (५।३।११५) वार्केण्यः । वर्करो मेषशावकः ।।९०,९१।।

७२. **चक तृप्तौ प्रतीघाते च** । चकते । चेके । चकितः । **कठिचकिभ्यामोरच्** (उण्, १।६४) चकोरः ।।९२।।

७३. **ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क तिकृ टिकृ टीकृ रघि लघि गत्यर्थाः** । कङ्कते । कङ्कः । वङ्कते । वङ्कः । श्वङ्कते । त्रङ्कते । ढौकते । अडुढौकत् । त्रौकते । अतुत्रौकत् । ष्वष्कते । ष्वाष्वष्क्यते । **सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्य** (६।१।६४) इति धात्वादेः षकारस्य सत्वप्रतिषेधात् सत्वन्न भवति । (२९) वस्कते । मस्कते । तेकते । अतितेकत् । तिकः । तिकादित्वात् फिञ्—तैकायनिः । टेकते । अटिटेकत् । टीकते । अटिटीकत् । टीका । रङ्घते । ररङ्घे । लङ्घते । ललङ्घे । **लङ्घिबंह्योर्नलोपश्च** (उण्, १।२९) इत्युप्रत्ययः—लघुः । **बालमूललघ्वङ्गुलीनां वा लो रत्वमापद्यत** (८।२।१८ वा) इति रपक्षे रघुः ।।९३—१०६।।

७४. **अघि वघि मघि गत्याक्षेपे** । अङ्घते । आनङ्घे । वङ्घते । ववङ्घे । विवङ्घिषते । मङ्घते ।

७५. **मघि कैतवे च** । पूर्वमस्य पाठः कैतवार्थस्यान्वाचितत्वद्योतनाय । (३०) ।।१०७—१०९।।

---

(२९) ष्वष्क इति पाठान्तरम् । तेन ष्वष्कते । षाष्वष्क्यत इति ।

(३०) कैतवार्थस्य समुच्चितत्वद्योतनायेति ङपुस्तके पाठः ।

७६. **राघृ लाघृ द्राघृ सामर्थ्ये**। राघते। रराघे। अरराघत्। लाघते। उल्लाघः।

७७. **द्राघृ आयामे च**। द्राघते ॥११०-११२॥

७८. **श्लाघृ कत्थने**। श्लाघते। श्लाघा। ॥११३॥

**इति आत्मनेभाषा उदात्ता अनुदात्तेतः।**

**अथ कवर्गान्ताः परस्मैपदिनः—**

७९. **फक्क नीचैर्गतौ**। फक्कति। पफक्क। फक्कः। फक्किका (३१) ॥११४॥

८०. **तक हसने**। तकति। तक्यम् ॥११५॥

८१. **तकि कृच्छ्रजीवने**। तङ्कति। आतङ्कः ॥११६॥

८२. **शुक गतौ**। शोकति। शुकः। शुक्रः। **शुक्राद् घन्** (४।२।२६) शुक्रो देवतास्य शुक्रियं हविः। (३२) ॥११७॥

८३. **बुक्क भषणे**। बुक्कति श्वा ॥११८॥

८४. **कक्ख हसने**। कक्खति। **शकादिभ्योऽटन्** (उण्, ४।८२) कक्खटः। (३३) ॥११९॥

८५. **ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः**। ओखति। ओखाञ्चकार। प्रोखति। मा भवानुचिखत्। राखति। अरराखत्। लाखति। अललाखत्। द्राखति। अदद्राखत्। ध्राखति। अदध्राखत् ॥१२०-१२४॥

८६. **शाखृ श्लाखृ व्याप्तौ**। शाखति। अशशाखत्। शाखा। श्लाखति।१२५-१२६॥

८७. **उख नख वख मख रख लख रखि लखि इखि ईखि वल्ग रगि वगि लगि अगि मगि तगि त्वगि त्रगि श्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः**। ओखति। प्रोखति। उवोख। **अभ्यासस्यासवर्णे** (६।४।७८) इतीयङुवङोर्विधानसामर्थ्याद् हलादिशेषो न भवति। ऊखतुः। अत्रैकादेशस्य पूर्व प्रत्यन्तवत्वादभ्यासग्रहणेन ग्रहणे सति

(३१) फणिभाषितभाष्यफक्किकाविषमाकुण्डलनामवापितेति नैषधे।

(३२) अयं माधवभट्टोजिभ्यां न दत्तः।

(३३) भट्टोजिमते कख हसने। प्रनिकखति। एवं माधवश्च।

ह्रस्वत्वं प्राप्नोति । तदभ्यासप्रकृत्यवयवयोरेकादेशस्य बहिरङ्ग-त्वेनासिद्धत्वादभ्यासमात्राश्रयं ह्रस्वत्वं न भवति । उखा । उचिखि-षति । औचिखत् । **ओणेर्ऋदित्करणं ज्ञापकं नित्यमपि द्विर्वचनमु-पधा कार्य्येण बाध्यत** इति लघूपधगुणे कृते द्विर्वचनम् । मा भवानु-चिखत् । नखति । नखः । वखति । मखति । मखो यज्ञः । रखति । लखति । वङ्खति । लङ्खति । इङ्खति । प्रेङ्खणम् । ईङ्खति । वलगति । वलिगतम् । **गुरोश्च हलः** (३।३।१०३) वल्गा । रङ्गति । रङ्गः । वङ्गति । वङ्गाः । लङ्गति । विलङ्गति । **डलयोरेकत्वस्मरणाद्** विडङ्गः । **लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम्** (६ । ४ । ३४, वा) इत्यनुनासिकलोपः—विलगितम् । अङ्गति । अङ्गाः । **पृषोदरादित्वाणत्वम्**—अङ्गणं चत्वरम् । **अङ्गिमदिमन्दिभ्य आरन्** (उण्, ३।१३४) अङ्गारः । अङ्गारसमूहे **पाशादिभ्यो यः** (४।२। ४९) अङ्गार्य्यः । मङ्गति । **मङ्गेरलच्** (उण्, ५।७०) मङ्गलम् । **तत्र साधु** (४।४।९८) इति यत्—मङ्गल्यम् । तङ्गति । तङ्गः । **त्वगि कम्पने च** त्वङ्गति । तत्वङ्ग । (३४) त्वङ्गः । त्रङ्गति । श्वङ्गति । श्रङ्गति । श्लङ्गति । इङ्गति । **इजादेः सनुमः** (८।४।३२) इति णत्वम् —प्रेङ्गणम् । इङ्गितम् । रिङ्गति । लिङ्गति । लिङ्गम् ॥१२७-१५१।

८८. **युगि जुगि रुगि वर्जने** । युङ्गति । जुङ्गति । रुङ्गति ॥१५२-१५४॥

८९. **दघि पालने** । दङ्घति (३५) ॥१५५॥

९०. **लघि शोषणे** । लङ्घति । ललङ्घ । लङ्घनम् । लङ्घत इति गत्यर्थस्यात्मनेपदिनः । अस्यापि गतौ वृत्तिर्दृश्यते । तथा च भट्टिः "**अन्ये चालङ्घिषुः शैलान् गुहास्वन्ये न्यनेषत ।**" इति (३६) ॥१५६

९१. **घघ हसने** । घघति । जघाघ ॥१५७॥

९२. **मघि मण्डने** । मङ्घति ॥१५८॥

---

(३४) उखि मखि नखि रखि इखि इत्येते माधवभट्टोजिभ्यामधिकाः पठिताः । त्रगि श्वगि इति तु तयोर्ग्रन्थेषु नास्ति ।

(३५) अयं माधवभट्टोजिभ्यां न पठितः ।

(३६) नाप्ययं माधवादिभिः पठितः ।

**९३. शिघि आघ्राणे ।** शिङ्घति । **आणको लूधूशिङ्घिधाञ्भ्यः** (उण्, ३।८३) । शिङ्घाणकः ।।१५९।।

**इति परस्मैभाषा उदात्ता उदात्तेतः ।**

**अथ चवर्गान्तान् आत्मनेपदिनः प्राह—**

**९४. वर्च दीप्तौ ।** वर्चते । वर्चः । ब्रह्मवर्चसम् । राजवर्चसम् ।। १६०।।

**९५. षच सेचने ।** सचते । असीषचत् । सक्तवः ।।१६१।।

**९६. लोचृ दर्शने ।** लोचते । अलुलोचत् । लोचनम् । आलोचयतीति लोकृ लोचृ णद कुप तर्क वृतु वृधु भाषार्था इति (३७) चौरादिकात् । आलोच्य इति ण्यन्ताद् **अचो यत्** (३।१।९७) । केवलाद्धि ण्यति घञि च कुत्वं स्यात् । **एरजण्यन्तानामिति** तु तन्मतेन यैर् **आर्धधातुके** (६।४।४६) इति णिलोपविधौ (६।४।५१) विषयसप्तमीष्यते ।।१६२।।

**९७. शच व्यक्तायां वाचि ।** शचते । शेचे । **इन् सर्वधातुभ्यः** (उण्, ४।११८) । शचिः । **उभे वनस्पत्यादिषु** (६।२।१४०) इति सूत्रे **कृदिकारादक्तिनः** (४।१।४५, गण) इति ङीषन्तः शचीशब्द उदाहृतः । मतान्तरे तु शार्ङ्गरवादित्वान् ङीनन्तः । शची ।।१६३।।

**९८. श्वच श्वचि गतौ ।** श्वचते । शश्वचे । श्वञ्चते । श्वञ्च्यते ।।१६४,१६५।।

**९९. कच बन्धने ।** कचते । चकचे । अचीकचत् । पचाद्यच् कचः । विकचम् । कर्मणि घञ् **न क्वादेः** (७।३।५९) इति कुत्वप्रतिषेधः काचः । ण्यन्तादेरजिति वा । **एरजण्यन्तानामिति** त्वार्धधातुके (६। ४।४६) इति णिलोपविधौ ये सप्तमीं मन्यन्ते तन्मते इति पूर्वमेवोक्तम् ।।१६६।।

**१००. कचि दीप्तिबन्धनयोः ।** कञ्चते । चकञ्चे । गौरादित्वान् ङीष् काञ्ची । ल्युट् काञ्चनम् । उभयत्राप्य**न्येषामपि दृश्यते** (६।३। ३७) इति दीर्घः (३८) । दीप्तौ चेति वक्तव्ये बन्धनग्रहणं विस्पष्टार्थम् ।।१६७।।

---

(३७) चुरादिष्विमे पठिताः । (२१७—२४३) ।

(३८) पृषोदरादित्वाद् दीर्घत्वे गौरादिङीषि काञ्चीति ङपुस्तके

१०१. **मच मुचि कल्कने**। कल्कनं दम्भः शाठ्यञ्च। मचते। मेचे। मुञ्चते। मुमुञ्चे। मुञ्च्यते ॥१६८, १६९॥

१०२. **मचि धारणोच्छ्रायपूजनेषु**। मञ्चते। मञ्चः ॥१७०॥

१०३. **पचि व्यक्तीकरणे**। पञ्चते। पङ्कः। बहुलवचनात् कनिन्। **षड्भ्यो लुक्** (७।१।२२) पञ्च। पञ्चमः। पञ्चक इति **संख्याया अतिशदन्तायाः कन्** (८।१।२२)। **पङ्क्तिविंशति** (५।१।५९) इति निपातनात्—पङ्क्तिर्दशसंख्या। प्रपञ्चयति प्रपञ्च इति तु चुरादिपाठात् ॥१७१॥

१०४. **ष्टुच प्रसादे**। स्तोचते। तुष्टुचे। तोष्टुच्यते। स्तोकः। **पोटायुवतीत्यादिभिर्जातिः** समस्यते (२।१।६५)। अग्निस्तोकः। संस्तोज इति वर्णविकाराभ्युपगमात् (३९) ॥१७२॥

१०५. **ऋज गतिस्थानार्जनोपार्ज्जनेषु**। अर्जते। ऋकारस्थोऽपि रेफो द्विहल्ग्रहणसामर्थ्याद्धल्ग्रहणेन गृह्यते। **तस्मान्नुड्** (७।४।७१) इति नुट्। आनृजे ॥१७३॥

१०६. **ऋजि भृजी भर्जने**। ऋञ्जते। ऋञ्जाञ्चक्रे। नुमागमनिमित्तापि यस्य गुरुमत्ता ततोऽप्याम् भवति यथा इन्दाञ्चकार। केचित् तु आनृञ्जे इति प्रत्युदाहरन्ति। **तत्रेन्धिभवतिभ्याञ्च** (१।२।६) इति इन्धिग्रहणेनानित्य आमिति ज्ञापितमेतत्। तदनित्य आमिति न भवतीति यथा कथञ्चित् समाधेयम्। भर्जते। बभृजे। भर्जिता। विभर्जिषते। भृक्तः भृक्तवान् षत्वमनिट्त्वञ्चास्य नास्तीति **भ्रस्जो रोपधयोः** (६।४।४७) इत्यत्रोक्तम्। ॥१७४,१७५॥

१०७. **एजृ भ्रेजृ भ्राजृ दीप्तौ**। एजते। एजाञ्चके। अङ्गमेजयः। मा भवानेजिजत्। एजतीति **एजृ कम्पन** इत्यस्य भवति। भ्रेजते। बिभ्रेजे। अबिभ्रेजत्। भ्राजते। बभ्राजे। अबिभ्रजत् अबभ्राजत्। भ्राजतेरनुदात्तेत्त्वप्रतिपादनार्थमकारानुबन्धे कर्त्तव्य ऋकारानुबन्धकरणमातमनेपदमात्रफलकम् ऋकारानुबन्धप्रकरणात्। भ्राजति-

---

पाठः। काचि इति तु माधवभट्टोजिभ्यामधिको धातुः पठितः। तन्मते तस्मात् काञ्ची काञ्चनमिति। कञ्चुकमिति कचिधातोः "बाहुलकादुक" इति माधवः।

(३९) पृषोदरादित्वात्।

श्चयं फणादिसप्तकेऽपि पठिष्यते । तत्र द्विष्पाठफलं ब्रुवते **व्रश्चादिसूत्रे** (८।२।३६) राजिसहचरितस्य भ्राजेर्ग्रहणं यथा स्यादिति । तेन भ्राष्ट्रिः भ्राक्तिरिति द्वयमुपपद्यते । आत्मनेपदानित्यत्वार्थमित्येके । तद्विकल्पञ्च यथाभिधानं बोधयति । तेन लभते लभति सेवते सेवति मोदते मोदति इत्यादि सिध्यति ॥१७६—१७८॥

१०८. **ईज गतिकुत्सनयोः** । ईजते । ईजाञ्चक्रे । वीज्यते ॥१७९॥

**इति आत्मनेभाषा उदात्ता अनुदात्तेतः** । उदात्ताः सेट इत्यर्थः ।

**अथ चवर्गान्ताः परस्मैपदिनः**—

१०९. **शुच शोके** । शोचति । शुशोच । शोकः । शुक् । शुक्रो मासः । तथा शुचिः ॥१८०॥

११०. **कुच शब्दे तारे च** । कोचति । चुकोच । कुच संपर्चन-कौटिल्यप्रतिष्टम्भविलेखनेष्विति ज्वलादौ पठिष्यते । पुनरिहार्थभेदेन पठ्यते ॥१८१॥

१११. **कुन्च क्रुन्च कौटिल्याल्पीभावयोः** । कुन्चति । चुकुन्च । कुचितम् । कुञ्चित्वा । कुञ्चिता । कुञ्चिका । कुक् । क्रुन्चति । क्रुङ् । क्रुञ्चौ । स्त्रियां क्रुञ्चा । **चोः कुः** (८।२।३०) इत्यत्र ञोप-धत्वमस्योक्तम् तेनोपधालोपो न भवति । **अन्ये तु ऋत्विगादिसूत्रे** (३।२।५९) निपातनैः सह निर्देशान्नलोपाभावमाहुः ॥१८२, १८३॥

११२. **लुन्च अपनयने** । लुन्चति । लुलुन्च । लुञ्चित्वा लुचित्वा । लुचितम् । मृष्टलुचितम् । लुक् । लुक्काययति ॥१८४॥

११३. **अन्चु गतिपूजनयोः** । अन्चति । आनन्च । अञ्चित्वा अक्त्वा । अक्त्वः । **अन्चोऽनपादाने** (८।२।४८) इति निष्ठानत्वम् । समक्नः । उदक्तमुदकं कूपात् । अञ्चिता अस्य गुरवः । प्राङ् । सध्र्यङ् । पूजायां प्राञ्चा प्राङ्भ्यां प्राङ्भिः । गतौ प्राचा प्राग्भ्या-मित्यादि । **स्त्रियामञ्चतेरुपसंख्यानम्** (४।१।६ वा) इति ङीप् **अचः** (६।४।१३८) इत्यकारलोपे **चौ** (६।३।१३८) इति दीर्घ-त्वम्—प्राची । **उद ईत** (६।४।१३९) इति ईकारः—उदीची । बाह्वादिषूदञ्चशब्दः पठ्यते । औदञ्चिः । शैषिके **द्युप्राग्** (४।२।१०१) इत्यादिना यत्—प्राचि जातः प्राच्यो गजः । **विभाषाञ्चेः** (५।४।८) इति खः—प्राचीनो वृक्षः । प्राचीना ब्राह्मणी ॥१८५॥

११४. **वञ्चु चञ्चु तञ्चु त्वञ्चु म्रुञ्चु म्लुञ्चु म्रुचु म्लुचु गत्यर्थाः।** वञ्चति । ववञ्च । वनीवच्यते । वनीवञ्चः । वञ्च्यं वञ्चन्ति वणिजः । वङ्क्यम् । वचित्वा वञ्चित्वा वङ्क्त्वा । वक्तः वक्तवान् । चञ्चति । चचञ्च । चञ्चित्वा चक्त्वा । चक्तः । चक्तवान् । पचाद्यच् चञ्चः । चञ्चा । **वृषादिभ्यः कलच्।** (उण् १।१०४) चञ्चलः। **मृगय्वादित्वात्** कुचञ्चुः । कथं चञ्चरीकः ? चरेर्यङ्लुकि **फर्फरीकादयश्च** (उण्, ४।२१) इति ईकन् (४०) । तञ्चति । तक्तम् । त्वञ्चति । म्रुञ्चति । म्लुञ्चति । म्रोचति अम्रुचत् अम्रोचीत् । म्रुचित्वा म्रोचित्वा म्रुक्त्वा । म्लोचति । अम्लुचत् अम्लोचीत् । म्लुक्तः ।।१८६-१९३।।

११५. **ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे** । ग्रोचति । ग्लोचति । अग्लुचत् अग्लोचीत् । कोजति । कुजः । कुक्तः । कुक्तवान् । खोजति ।।१९४—१९७।।

११६. **ग्लुञ्चु षस्ज गतौ** । ग्लुञ्चति । अग्लुचत् अग्लुञ्चीत् । अङ्यस्यापि **केचि**दनुनासिकलोपाभावमिच्छन्ति अग्लुञ्चदिति । ग्लुञ्चित्वा ग्लुक्त्वा । सज्जति । सिसज्जिषति । सिषज्जयिषति । सज्जः । सज्जत इति **भाष्यकारवचना**दस्यात्मनेपदम् ।।१९८,१९९।।

११७. **गुजि अव्यक्तशब्दे** । गुञ्जति । जुगुञ्ज । गुञ्जितम् । **गुरोश्च हलः** (३।३।१०३) गुञ्जा ।।२००

११८. **अर्च पूजायाम्** । अर्चति । आनर्च । **अर्चिशुचि** (उण्, १। २७) इत्यादिना इस्—अर्चिः । युजादिष्वप्ययं पठ्यते । ततस्तु कर्त्रभिप्राये क्रियाफले विवक्षिते आत्मनेपदमस्ति । परस्मैपदार्थमिह पठ्यते । युजादिषु हि कतिपये धातवः कर्त्रभिप्राये क्रियाफले आत्मनेपदिनो वक्ष्यन्ते । तत्र चेदमेव लिङ्गम् । पूर्वे चकारान्ता ह्रस्वोकारयुक्ता इति पृथगस्य निर्देशः ।।२०१।।

११९. **म्लेच्छ अव्यक्तायां वाचि** । म्लेच्छति । मिम्लेच्छ । **क्षुब्धादिसूत्रे** (७।२।१८) निपातनात् म्लिष्टम् । म्लेच्छितम् ।।२०२।।

१२०. **लछ लाछि लक्षणे** । लच्छति । लाञ्छति । लाञ्छनम् ।

---

(४०) चञ्चरीको भ्रमर इत्यर्थः ।

ल्युट् । लाञ्छो जारः । मत्वर्थे इनिः—लाञ्छिनी ॥२०३,२०४॥

१२१. **वाछि इच्छायाम्** । वाञ्छति । वाञ्छा ॥२०५॥

१२२. **आछि आयामे** । आञ्छति । आञ्छ । एतन्न्यासकारस्य मतम् । केचित् तु **अत आदेः** (७।४।७०) इति तपरकरणं मुखसुखार्थमिति व्याचक्षाणा आनाञ्छे इत्युदाहरन्ति ॥२०६॥

१२३. **ह्रीच्छ लज्जायाम्** । ह्रीच्छति । ह्रीच्छा ॥२०७॥

१२४. **हुर्च्छा कौटिल्ये** । हूर्च्छति चौरः । कौटिल्यं करोति । अपसरतीत्यर्थः । जुहूर्च्छ । हूर्णवान् । हूर्णमनेन । हूर्च्छितमनेन । प्रहूर्णः । प्रहूर्च्छितः । हूः । हुरौ । हुरः ॥२०८॥

१२५. **मुर्च्छा मोहसमुच्छ्राययोः** । मूर्च्छति । मूर्तः । मूर्तवान् । **न ध्याख्या** (८।२।४७) इति निष्ठानत्वनिषेधः । मूर्च्छितमनेनन । मूर्तमनेन । प्रमूर्तः । प्रमूर्च्छितः । मूर्च्छा । **तदस्य सञ्जातं तारकादिभ्य इतच्** (५।२।३३) मूर्च्छितः ॥२०९॥

१२६. **स्फुर्छा विस्तृतौ** । स्फूर्छति । पुस्फूर्छ ॥२१०॥

१२७. **युच्छ प्रमादे** । युच्छति । युयुच्छ ॥२११॥

१२८. **उछि उञ्छे** । उञ्छति । उञ्छाञ्चकार । उञ्चिच्छिषति । निष्ठा प्रोञ्छितम् । तुदादावप्ययं पठिष्यते । शपोऽनुदात्तत्वार्थमिह पठ्यते । (४१) ॥२१२॥

१२९. **उच्छी विवासे** । उच्छति । उचिच्छिषति । व्युच्छा । व्युष्टम् । अयमपि तुदादौ पठिष्यते ॥२१३॥

१३०. **ध्रज ध्रजि धृज धृजि ध्वज ध्वजि गतौ** । ध्रजति । दध्राज । ध्रञ्जति । धर्जति । दरीधृज्यते । धृञ्जति । दरीधृञ्ज्यते । ध्वजति । ध्वञ्जति ॥२१४-२१९॥

१३१. **कूज अव्यक्तशब्दे** । कूजति । चुकूज । **घञि न क्वादेः** (७।३।५९) इति कुत्वनिषेधः । कूजः ॥२२०॥

---

(४१) उञ्छः कणश आदानं कणिशाद्यर्जनं शिलमिति यादवः । उञ्छति उच्चिनोतीत्यर्थः । बदराण्युञ्छति बादरिकः । श्यामाकिकः ।

१३२. **अर्ज षर्ज अर्जने**। अर्जति। आनर्ज। स्वर्गः। ऋजुः (४२)। अर्जिजिषति। सर्जति। सिसर्जिषति। सिषर्जयिषति ॥२२१,२२२॥

१३३. **गर्ज शब्दे**। गर्जति। जगर्ज। गर्जः ॥२२३॥

१३४. **तर्ज भर्त्सने**। तर्जति। ततर्ज। तर्जनी ॥२२४॥

१३५. **कर्ज व्यथने**। कर्जति। चकर्ज। कर्जः ॥२२५॥

१३६. **खर्ज मार्जने च**। खर्जति। चखर्ज। खर्जनः। खर्जूरः **खर्जिपिञ्जादिभ्यः ऊरोलचौ** (उण्, ४।९१)। **कषिवमितनिधनिसर्जि-खर्जिभ्य ऊः** (उण्, १।८१) खर्जूः ॥२२६॥

१३७. **अज गतिक्षेपणयोः**। अजति। प्रवेता प्राजिता (४३)। प्रवयणं प्राजनम्। समजः समाजः। व्याजः। वेवीयते इति यङि आर्ध-धातुकविषये वीभावः। **संज्ञायां समज** (३।३।९९) इत्यादिना क्यप्—समज्या। **अजिरशिशिर** (उण्, १।५३) इत्यादिना किरच्—अजिरं चत्वरम्। अजः। जातिलक्षणङीषि प्राप्ते टाप्—अजा छागी ॥२२७॥

१३८. **तेज पालने**। तेजति। तेजः ॥२२८॥

१३९. **खज मन्थे च**। खजति। खजः। खाजकः। खजाकः। खजाका ॥२२९॥

१४०. **खजि गतिवैकल्ये**। खञ्जति। चखञ्ज। खञ्जः। खञ्जनः ॥२३०॥

१४१, **एजृ कम्पने**। एजति। एजाञ्चकार। मा भवनिजिजत्। अङ्गमेजयः ॥२३१॥

---

(४२) अर्जिदृशिकम्यमीत्यादिना (उण्, १।२७) कुप्रत्यय ऋजादेशश्च।

(४३) अजेर्व्यघञपोः (२।४।५६) इत्यत्र वलादावार्धधातुके वेति भाष्यम्। एतच्च तत्र ब्राह्मणसारथ्योर्विवादात् "एवं हि कश्चिद् वैयाकरण आह कोऽस्य रथस्य प्रवेतेति। सूत आह अहमायुष्मन्नस्य रथस्य प्राजितेति। वैयाकरण आह अपशब्द इति। सूत आह प्राप्तिज्ञो देवानांप्रियः, न त्विष्टज्ञः। इष्यत एतद्रूपमिति। वैयाकरण आह अहो खल्वनेन दुरुतेन बाध्यामह इति। सूत आह न खलु वेञः सूतः। सुवतेरेव सूतः। यदि सुवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम्। इति (महाभाष्य २।४।५६)।

१४२. **टुग्रोस्फूर्जा वज्रनिर्घोषे**। स्फूर्जति। स्फूर्जथुः। स्फूर्णः। स्फूर्णमनेन (४४) स्फूर्जितमनेन। दीर्घोकारस्योपदेश **उपधायाञ्च** (८।२।७८) इत्यस्यानित्यत्वज्ञापनार्थं इति। तेन मुर्च्छति हुर्च्छति स्फुर्च्छतीत्यपि भवतीति **केचित्** ॥२३२॥

१४३. **क्षि क्षये**। क्षयति। **निष्ठायामण्यदर्थे** (६।४।६०) इति दीर्घः। **क्षीयो दीर्घाद्** (८।२।४६) इति नत्वम्। क्षीणः। क्षितम्। क्षेता। क्षि निवासगत्योः क्षिष् हिंसायामिति च गणान्तरे पठ्यते। क्षियति, क्षिणोति। उत्तरधातुसाधर्म्यानुरोधेन चाजन्तोऽप्ययमत्र निर्दिश्यते (४५) ॥२३३॥

१४४. **क्षीज अव्यक्ते शब्दे**। क्षीजति। अस्यानन्तरं कूजतिर्न निर्दिश्यते। कूजतेः स्वरप्रयुक्तत्वात् पृथङ् निर्देशः। **अन्यस्त्वाह** क्षीज-कूजोः पृथक् करणादर्थभेदोऽनुसन्धेयः। तथाहि कूजन्ति कपोता इत्युक्ते स्वनन्तीति गम्यते। क्षीजति दासीत्युक्ते सखेदं स्वनतीति गम्यते। एवमन्यत्रापि धातुभेदेऽर्थभेदोऽवगन्तव्यः ॥२३४॥

१४५. **लज लजि भर्जने**। लजति। लञ्जति। लङ्गः, रङ्गः, डङ्गः। **रलयोर्डलयोरेकत्वस्मरणमिति**। **संज्ञायाम्** (३।३।१०९) ण्वुल्—लञ्जिका वेश्या ॥२३५,२३६॥

१४६. **लाज लाजि भर्त्सने च**✪। चकारो भिन्नक्रमः। एतावपि भर्जने पठ्यते इत्यर्थः। लाजति। लाजाः। लाञ्जति ॥२३७,२३८॥

१४७. **जज जजि युद्धे**। जजति। जञ्जति। जङ्गः। जङ्गलम्। ॥२३९,२४०॥

१४८. **तुज तुजि हिंसायाम्**। तोजति। तुतोज।

१४९. **तुजि पालने च**। तुञ्जति। तुतुञ्ज। तुङ्गः ॥२४१,२४२॥

---

(४४) स्फुर्णमिति प्रामादिकम्। चोः कु (८।२।३०) इति गकारलोपस्य शास्त्राभावात्।

(४५) अत्र माधवः—"इह पाठस्तु उत्तरधातुसाम्यादिति मैत्रेये प्रतिपादित'मिति।

✪ उत्तरत्र 'चकारो भिन्नक्रमः, इत्युच्यते। तेन 'लाज लाजि च भर्त्सने' इति शुद्धेन पाठेन भाव्यम्। यु० मी०

**१५०. गज गजि गृज गृजि मुज मुजि शब्दार्थाः ।**

**१५१. गज मदने च** । गजति । जगाज । गजः । गाजः । गञ्जति । गञ्जा । गञ्जः । गर्जति । जगर्ज । जगृजतुः। जगृजुः। गर्जः । गृञ्जति । जरीगृञ्ज्यते । मोजति । मुञ्जति । मुञ्जः, अच् ॥२४३-२४८॥

**१५२. वज व्रज गतौ** । वजति । ववाज । एत्त्वाभ्यासलोपप्रतिषेधश्चास्य **चान्द्रै**रुदाहृतः । ववजतुः । ववजुः । अवजीत् । अवाजीत् । वाजः । व्रजति । वव्राज । अव्राजीत् । प्रव्रजितः । परिव्राट् । व्रजः । व्रज्या ॥२४९,२५०॥

**इति परस्मैभाषा उदात्ता उदात्तेतः** । उदात्तत्वमिदं क्षिधातुवर्जम् । तस्य त्वजन्तत्वादनुदात्तत्वमित्यागमः । तर्कुग्रामन्यायेनोदात्त इत्युक्तम् (४६) ।

**अथात्मनेपदिनष्टवर्गान्ताः—**

**१५३. अट्ट अतिक्रमणहिंसयोः** । दोपधोऽयं स्मर्य्यते । अट्टते । आनट्टे । आट्टिटत् । अट्टिटिषते । अट्टयति । अट्टायते । **ष्टुना ष्टुः** (८।४।४१) इत्यत्र **न्यासकारेण** तकारोपधोऽयमित्युक्तम् । तथा च अतिट्टिषते । आतिट्टदिति भवति (४७) ॥२५१॥

**१५४. वेष्ट वेष्टने** । वेष्टते । विवेष्टे । अविवेष्टत् । अववेष्टत् । वेष्टः ॥२५२॥

**१५५. चेष्ट चेष्टायाम्** । चेष्टते । अचिचेष्टत् । अचचेष्टत् । चेष्टा ॥२५३॥

**१५६. गोष्ट लोष्ट संघाते** । गोष्टते । गोष्टः । लोष्टते । लोष्टः ॥२५४,२५५॥

**१५७. घट्ट चलने** । घट्टते । जघट्टे । घट्टः । घट्टा ॥२५६॥

**१५८. स्फुट विकसने** । स्फोटते । पुस्फुटे । स्फुटतीति विशरणे भविष्यति ॥२५७॥

---

(४६) भट्टग्रामन्यायादिति ङपुस्तके पाठः । [अग्रे 'भट्टग्रामन्यायेन' इति वक्ष्यति (२९) यु० मी०] ।

(४७) माधवादिमते तु तोपधत्वेऽपि अट्टिटिषते इत्येव रूपम् । न तु अतिट्टिषते । णौ चङि अट्टिटत् । न तु आतिट्टदिति ।

१५९. **अठि गतौ** । अण्ठते । आनण्ठे ॥२५८॥

१६०. **वठि एकचर्य्यायाम्** । वण्ठते । वण्ठः ॥२५९॥

१६१. **मठि कठि शोके** । मण्ठते । मण्ठयते । कण्ठते । कण्ठः । उत्कण्ठते । उत्कण्ठयते । उत्कण्ठा ॥२६०,२६१॥

१६२. **मुठि पालने** । मुण्ठते । मुमुण्ठे ॥२६२॥

१६३. **हेठ विबाधायाम्** । हेठते । जिहेठे । विहेठितः । हेठो वधः ॥२६३॥

१६४. **एठ च** । एठते । एठाञ्चक्रे ॥२६४॥

१६५. **हिडि गत्यनादरयोः** । हिण्डते । जिहिण्डे । हिण्डनम् ॥२६५॥

१६६. **कुडि दाहे** । कुण्डते । कुण्डः । कुण्डा । कुण्डी ॥२६६॥

१६७. **हुडि संघाते** । हुण्डते । हुण्डा । हुण्डनम् ॥२६७॥

१६८. **वडि वेष्टने** । वण्डते ॥२६८॥

१६९. **मडि च** । मण्डते । मण्डनम् । मण्डः । वृषादित्वात् कलच्—मण्डलम् । गौरादित्वान् मण्डली । मण्डतीति भूषायां भवति ॥२६९॥

१७०. **भडि परिहासे** । भण्डते । भण्डः । भाण्डम् । (४८)।२७०

१७१. **पिडि संघाते** । पिण्डते । पिण्डः । गौरादित्वात् पिण्डी । हुडि पिडि संघात इति नोक्तम् । पिडेः पवर्गाद्यनुरोधात् ॥२७१॥

१७२. **मुडि मार्जने** । मुण्डते मुखम् । मुण्डनम् । मुण्डतीति खण्डने वक्ष्यति ॥२७२॥

१७३. **तुडि तोडने** । तुण्डते । तुतुण्डे । तुण्डः । तुण्डा । **इन् सर्वधातुभ्यः** (उण्, ४।११९) । तुण्डिः । तुण्डिभः ॥२७३॥

१७४. **पडि गतौ** । पण्डते । पण्डा । पण्डितः ॥२७४॥

१७५. **कडि मदे** । कण्डते । चकण्डे ॥२७५॥

१७६. **हुडि हरणे** । हुण्डते ॥२७६॥

---

(४८) एतदनन्तरं ङपुस्तके भुडि भरणे । भुण्डते । बुभुण्डे । भुण्ड इति पठ्यते ।

**१७७. चडि कोपे** । चण्डते । चण्डः । **पतिचण्डिभ्यामालञ्** (उण्, १।११४) चण्डालः । स्वार्थेऽण् । चाण्डालः ॥२७७॥

**१७८. शडि रुजायां संघाते च** । शण्डते । शशण्डे । शण्डः । परमशण्डः । कुशण्डिका ॥२७८॥

**१७९. तडि ताडने** । तण्डते । ततण्डे । वितण्डा ॥२७९॥

**१८०. खडि मन्थे** । खण्डते । खण्डः । खड खडि कडि भेद इति चुरादौ पठ्यते । तस्य खण्डयति । खण्डना ॥२८०॥

**१८१. हेडृ होडृ अनादरे** । हेडते । त्यजतीत्यर्थः । अजिहेडत् । हेडा हेला । होडते । जुहोडे । होडा । होडः । विहोडते । विहोडाञ्चक्रे । (४९) । हेड वेष्टन इति घटादौ पठ्यते । हेडति । हिडयति । अनादरे तु हेडयति ॥२८१,२८२॥

**१८२. वाडृ आप्लाव्ये** । वाडते । ववाडे । वाडः ॥२८३॥

**१८३. द्राडृ ध्राडृ विशरणे** । द्राडते । ध्राडते । ध्राडः ॥२८४, २८५॥

**१८४. शाडृ श्लाघायाम्** । शाडते । शशाडे । शाडः । शालः । रूपशाली । शाडा । शाला ॥२८६॥

**इति आत्मनेभाषा उदात्ता अनुदात्तेतः ।**

**अथ टवर्गान्ताः परस्मैपदिनः कथ्यन्ते—**

**१८५. शौटृ गर्वे** । शौटति । अशुशौटत् । शौटीरः । (उण्, ४। ३०) । **शौटीरस्त्यागिधीरयोः** ॥१८७॥

**१८६. यौटृ संबन्धे** । यौटति । अयुयौटत् । यौटः । पृषोदरादित्वाद् ह्रस्वत्वे योटनमिति ॥२८८॥

**१८७. मेटृ म्रेटृ म्लेटृ उन्मादने** । मेटति । अमिमेटत् । मेटकम् । म्रेटति । अमिम्रेटत् । म्लेटति । अमिम्लेटत् । (५०) ॥१८९-२९१॥

---

(४९)होड इति पचाद्यजन्तादाचारे क्विप् । आचारे वगल्भक्लीबहोडेभ्यः क्विब् वेति (३।१।१२, वा) । एतेषामनुदात्तेत्त्वञ्च प्रतिज्ञायते । विहोडते । अनेकाच्त्वादाम् । विहोडाञ्चक्र इति ।

(५०) ङपुस्तके म्रेडृ म्लेडृ इति पाठः । आम्रेडितमिति क्तप्रत्यये "ठान्तमध्ये पाठस्त्वर्थसाम्यादिति माधवः ।

**१८८. कटे वर्षावरणयोः** । कटति । अकटीत् । कटिः । कटः । कटकं वलयोऽस्त्रियाम् । कटनगरे जातः शैषिकश्छः—कटनगरीयः । कटघोषीयः (५१) ॥२९२॥

**१८९. अट पट गतौ** । अटति । आट । आटः । अटाटयते । पटति । पटः । पटी । पाटः ॥२९३ – २९४॥

**१९०. रट परिभाषणे** । रटति । क इति शब्दं रटति करटः ।२९५

**१९१. लट बाल्ये** । लटति । लाटः । लट्वा ।२९६॥

**१९२. वट वेष्टने** । वटति । वटः । वटकः । वाटकः । वटिः । **तुन्दिबलिवटेर्भः** (५।२।१३९) वटिभः । वाटः । **हलश्च** (३।३।१२१) इत्यधिकरणे घञ् । वाटिका ॥२९७॥

**१९३. शट रुजाविशरणगत्यवसादनेषु** । शटति । शशाट । शाटकः । शाटः । शाटी ॥२९८॥

**१९४. किट खिट त्रासे** । केटति । खेटति । खेटः ॥२९९,३००॥

**१९५. शिट षिट अनादरे** । शेटति । सेटति । सिषेट ॥३०१,३०२

**१९६. जट झट संघाते** । जटति । जटः । जटा । झटति । झाटः । कर्मणि घञ् ॥३०३,३०४॥

**१९७. भट भृतौ** । भटति । भाटः । भटः । भटित्रम् ॥३०५॥

**१९८. तट उच्छ्राये** । तटति । तटः । तटम् । तटी । तटिनी सरित् ॥३०६॥

**१९९. खट काङ्क्षायाम्** । खटति । खटः । खाटः । खट्वा ।।३०७

**२००. णट नृतौ** । नटति । प्रणटति । नटः । नाटः । नाटकः । नाटिका ॥३०८॥

**२०१. पिट शब्दसंघातयोः** । पेटति । पेटः । पेटकः । पेटी । पिटः । पिटकः । **बलाकादयश्च** (उण्, ४।१४) इति आकः—पिटाकः ॥३०९॥

**२०२. हट दीप्तौ** । हटति । जहाट । हाटः । हाटकम् ॥३१०॥

**२०३. षट अवयवे** । सटति । सिषाटयिषति । साटः । सटा ।३११

---

(५१) प्राचां कटादेरिति (४।२।१३९) छः । अणोऽपवादः ।

२०४. **लुट विलोडने**। लोटति। लोटः। दिवादिष्वप्ययं पठ्यते। लुट्यति ॥३१२॥

२०५. **चिट परप्रेष्ये**। चेटति। चेटः। गौरादित्वाच् चेटी। चेटकः ॥३१३॥

२०६. **विट शब्दे**। वेटति। विटः इगुपधात् कः। विटपः। वेटः ॥३१४॥

२०७. **बिट बिड आक्रोशे**। बेटति। बेटः। बेडति। बिडालः ॥ ॥३१५,३१६॥

२०८. **इट किट कट इ गतौ**। एटति। इयेट। एटः। केटति। चिकेट। केटः। कटति। अकटीत् अकाटीत्। कटिमिदितमेके पठन्ति। तन्मते कण्टति। कण्टः। कण्टकम्। अयति। इयाय। इयतुः। वत्स्यत्प्रवृत्त्येह कार्य्याणि क्रियन्त इति यणादेशं कृत्वा स्थानिवत्त्वाद् द्विर्वचनमत्र। इकारवत्प्रकरणादयतिरुपदिष्टः। तदनुरोधेन चान्ये। अयति दीर्घमिच्छन्ति **चान्द्राः**। व्यपदेशिवद्भावेन गुरुमत्त्वादाम्प्रत्ययमुदाहरन्ति च। अयाञ्चकारेति ॥३१७-३२०॥

२०९. **मडि भूषायाम्**। मण्डति। मण्डकम्। मण्डनम्। मण्डनः। **शलिमण्डिभ्यामूकण्** (उण्, ४।४३) मण्डूकः। कूपमण्डूकः। पात्रेसमितादित्वात् ॥३२१॥

२१०. **कुठि कुडि वैकल्ये**। कुण्ठति। कुण्ठा। कुण्ठः। कुण्डति। कुण्डा। कुण्डम् ॥३२२, ३२३॥

२११. **मुट प्रमर्द्दने**। मोटति। मोटनम् (५२) ॥३२४॥

२१२. **चुटि अल्पीभावे**। चुण्टति। चुचुण्ट। चुण्टः। चुट इत्येके। चोटति। चोटी ॥३२५॥

२१३. **मुडि खण्डने**। मुण्डति। मुण्डः। उकारवत्पवर्गादिप्रकरणाद् इहायं निर्द्दिश्यते। मडि भूषायामिति उकारवान्न भवतीति डकारान्तोऽप्यकारवत्त्वादादौ निर्द्दिष्टः ॥३२६॥

---

(५२) अत्र माधवः—"मुड इति धनपालः। पुड इति पकारादिडान्त इति शाकटायनः। क्षीरस्वामी तु द्वावपि इदितौ पपाठ। मैत्रेयस्त्वमुं टान्तमेव पठित्वा मुडि खण्डने इति चाग्रे पठित्वा पुडि च इत्येक इत्याह इति"।

२१४. **पुडि चेत्येके** । पुण्डति । पुण्डः । पुण्ड्रम् । पुण्डरीकम् ।३२७

२१५. **वटि विभाजने** । वण्टति धनम् । वण्टनम् । वण्टः ॥३२८॥

२१६. **रुटि लुटि स्तेये** । रुण्टति । रुण्टः । लुण्टति । लुण्टाकः । लुण्टयतीति चुरादिपाठात् ॥३२९,३३०॥

२१७. **स्फुटिर् विशरणे** । स्फोटति । अस्फुटत् । अस्फोटीत् । स्फोटः । स्फुट विकशन इति कुटादौ पठ्यते । स्फुटति । अस्फुटीत् ॥ ३३१॥

२१८. **पठ व्यक्तायां वाचि** । पठति । पपाठ । पाठः ॥३३२॥

२१९ **वठ स्थौल्ये** । वठति । वठः । वाठः । वाठरः ॥ ३३३॥

२२०. **मठ मदनिवासयोः** । मठति । मठः । माठः ॥३३४॥

२२१ **कठ कृच्छ्रजीवने** । कठति । कठनम् । कठः । प्रोक्तार्थे **कलापिवैशम्पायनान्तेवासिभ्यश्च** (४।३।१०४) इति णिनिः । तस्य **कठचरकाल्लुग्** (४।३।१०७) इति लुक् । ततस्तदधीत इत्यण् । तस्य **प्रोक्ताल्लुग्** (४।२।६४) इति लुक् । ततस्तस्येदमित्यर्थे **गोत्रचरणाद् वुञ्** (४।३।१२६) काठकं छन्दः शाखाविशेषः ॥३३५॥

२२२. **रठ परिभाषणे** । रठति । रराठ । रेठतुः । राठः ॥३३६॥

२२३. **हठ प्लुतिशङ्कुबन्धनयोः** । हठति । जहाठ । हठः । हठनम् ॥३३७॥

२२४. **रुठ लुठ उपघाते** । रोठति । लोठति । लोठः । निर्लोठति । निर्लोठनम् ॥३३८,३३९॥

२२५. **उठ इत्येके** । ओठति । उवोठ । ओठः ॥३४०॥

२२६. **पिठ हिंसासंक्लेशयोः** । पेठति । पिठः । पेठः ॥३४१॥

२२७. **शठ कैतवे च** । शठति । शठः ॥३४२॥

२२८. **शुठ गतिप्रतीघाते** । शोठति । शोठः ॥३४३॥

२२९. **कुठि च** । कुण्ठति । कुण्ठः ॥३४४॥

२३०. **लुठि आलस्ये** । गतिप्रतिघातेऽपि वृत्तिरस्य । लुण्ठति । लुण्ठः ॥३४५॥

२३१. **शुठि शोषणे** । शुण्ठति । शुण्ठः । शुण्ठी । पचाद्यजन्ताद् गौरादिङीष् ।।३४६।।

२३२. **रुठि लुठि गतौ** । रुण्ठति । रुण्ठः । लुण्ठति । लुण्ठः ।३४७, ३४८।।

२३३ **चुड्ड भावकरणे** । चुड्डति । चुड्डा । क्विपि चुत् ।३४९।

२३४. **अड्ड अभियोगे** । अड्डति । अड्डिडिषति । अड्डा । क्विपि अत् । दोपधावेतौ ।। तथा—**कड्डिरपि** । कड्डति । कड्डनः । क्विपि कत् । कज्जलम् ।।३५०,३५१।।

२३५. **क्रीडृ विहारे** । क्रीडति । आक्रीडते । संक्रीडते । अनुक्रीडते । परिक्रीडते । अचिक्रीडत् । क्रीडा ।।३५२।।

२३६. **तुडृ तोडने** । तोडति । अतुतोडत् । तोडः ।।३५३।।

२३७. **हूडृ होडृ गतौ** । हूडति । अजुहूडत् । होडति । अजुहोडत् । होडचम् ।।३५४,३५५।।

२३८. **रौडृ अनादरे** । रौडति । अरुरौडत् ।।३५६।।

२३९. **रोडृ लोडृ उन्मादने** । रोडति । अरुरोडत् । रोडः । रोडकः । रोडा । लोडति । अलुलोडत् । लोडा । लोडः । डलयोरेकत्वस्मरणात् लोलः ।।३५७,३५८।।

२४०. **अड उद्यमे** । अडति । अडः । व्यडः । व्याडिः **अत इञ्** (४।१।९४) । स्वागतादित्वाद् (द्र० ७।३।७) ऐच् प्रतिषेधः ।३५९

२४१. **लड विकाशे** । लडति । ललति । लालयति । लालनम् । डलयोरैक्यात् ।।३६०।।

२४२. **कड मदे** । कडति । कडः । कलः । कलनम् । निष्कलः (५३) । निष्कला । कलं त्रायते रक्षतीति कलत्रम् । कडत्रम् । तुदादावप्ययं पठिष्यते । विकलः । कलति ।।३६१।।

२४३. **कड्ड कार्कश्ये** । कड्डति । चकड्ड । क्विपि कत् ।।३६२

२४४ **गडि वदनैकदेशे** । गण्डति । गण्डः । सर्वधातुभ्य इन्, पृषोदरादित्वाद्दीर्घः—गाण्डिः । **गाण्डयजगात् संज्ञायामिति** (५।२।११०)

---

(५३) ङपुस्तके तु गौरादित्वान् ङीष् । निष्कलीति पाठः ।

मत्वर्थे वः । गाण्डिवम् । "**अधिरोहति गाण्डिवं महेषौ ।**" कृदिकारादितिङीष्—गाण्डी । तुल्या हि संहिता गाण्डचजगादिति । तस्मादतोऽपि वः—गाण्डीवम् (५४) ॥३६३॥

**इति परस्मैभाषा उदात्ता उदात्तेतः** । उदात्तत्वमयतिवर्जम् । भट्टगामन्यायेन☼ तूदात्ता इति सामान्योक्तिः ।

**अथ पवर्गान्ता आत्मनेपदिनः**—

२४५. **तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः** । तेपते । तेप्ता । अतितेपत् । तिपः ।

२४६. **तेपृ कम्पने च** । तेपते । अतितेपत् । तेपः । स्तेपते । तिष्टिपे । तिष्टेपे ॥३६४-३६७॥

२४७. **ग्लेपृ दैन्ये** । ग्लेपते । अजिग्लेपत् ॥३६८ ।

२४८. **गेपृ च** । गेपते । अजिगेपत् ॥३६९॥

२४९. **टुवेपृ कम्पने** । वेपते । विवेपे । वेपथुः । **न भाभू** (८।४।३४) इत्यादिना णत्वप्रतिषेधः प्रवेपनम् (५५) ॥३७०॥

२५० **केपृ गेपृ ग्लेपृ च** । कम्पने इत्यपेक्षते । केपते । अचिकेपत् । गेपते । अजिगेपत् । ग्लेपते । ग्लेपृधातुः पुनः पठ्यते । दैन्यादर्थान्तरार्थम् ॥३७१॥

२५१. **पेबृ षेबृ सेवने** । पेबते । अपिपेबत् । सेवते ॥३७२,३७३॥

२५२. **रेबृ प्लेबृ गतौ** । रेबते । रेबा । प्लेबते । (५६) ॥३७४,३७५॥

२५३. **त्रपूष् लज्जायाम्** । त्रपते । त्रेपे । त्रपिता त्रप्ता । त्रपा । अपत्रपिष्णुः । ण्यत्—अपत्राप्यम् ॥३७६॥

२५४. **कपि चलने** । कम्पते । चकम्पे । कम्पयते । कम्पः अनु-

---

(५४) गाण्डीवी कनकशिलानिभं भुजाभ्यामिति च भारवेः प्रयोगः ।

☼ पूर्वत्र पृष्ठ २२ तर्कुग्रामन्याय द्रष्टव्य ।

(५५) एतस्मादनन्तरं कुवेप च । कुवेपते । कुवेप इति क्वचिद् दृश्यते । एतत्तु माधवादौ नास्ति । नापि सर्वेषु धातुप्रदीपपुस्तकेषु ।

(५६) क्वचित् रेब प्लब इति पाठः । स च भट्टोजिमाधवाभ्यां धृतः ।

कम्पा । कम्प्रः **नमिकम्पि** (३।२।१६७) इत्यादिना रः । **ताच्छीलिकेषु क्वचिद् वासरूपविधिरस्तीति** ज्ञापितमेतदत्र दीपिग्रहणेन । तेन कम्पना शाखा ।।३७७।।

**२५५. रबि लबि अबि शब्दे** । रम्बते । रम्बयते । ररम्बे । करम्बः ।

**२५६. लबि अवस्रंसने च** । लम्बते । ललम्बे । अलाबूः **नञि लम्बेर्नलोपश्च** (उण् १।८७) इत्यूप्रत्ययो वृद्धिश्च । विडम्बते । विडम्बयति । "**प्रभातकल्पां रजनीं व्यडम्बयत्**" डलयोरैक्यात् । अम्बते । आनम्बे । अम्बः । पचाद्यच् । अम्बा । अम्बरम् ।।३७८—३८०।।

**२५७. कबृ वर्णे** । कबते । चकबे । अचकाबत् । **मद्गुरादयश्च** (उण् १।४१) इति कुरच् रमागमश्च । कर्बुरः । **इन् सर्वधातुभ्य** (उण् ४।११६) इति कबिः ।।३८१।।

**२५८. क्लीबृ अधाष्टर्ये** । क्लीबते । चिक्लीबे । अचिक्लीबत् । क्लीबम् । क्लीबाञ्चक्रे (५७) ।।३८२।।

**२५९. क्षीबृ मदे** । क्षीवते क्तप्रत्यये निपातनात् क्षीवः ।।३८३।।

**२६०. शीभृ कत्थने** । शीभते । अशिशीभत् । शीभः ।।३८४।।

**२६१. चीभृ च** । चीभते । अचिचीभत् ।।३८५।।

**२६२. रेभृ शब्दे** । रेभते । अरिरेभत् । विरिब्धः । विरेभितः ।।३८६।।

**२६३. ष्टभि ष्कभि प्रतिबन्धे** । स्तम्भते । तिष्टम्भयिषति । विष्टम्भते । विष्टभ्यते इति स्तभ्नातेः सौत्रधातो रूपम् । टकारपरः षकारोऽयमित्येके—उपष्टम्भते । टिष्टम्भिषते । स्कम्भते । चस्कम्भे । विस्कम्भ्यते (५८) । विष्कभ्यत इति स्कभाते रूपम् ।।३८७,३८८।।

**२६४. जभ जृभि गात्रविनामे** । जम्भते । जभ्यम् । जम्भा (५९) । जभितम् । जभी इत्येके जभते । जब्धम् । **नुम्विधावुपदेशिवद्वचनमिति** त्विदितामेव नुम्विधाविष्यते धातुग्रहणात् । अतो **गुरोश्च हलः**

(५७) क्लीबशब्दात् पक्षे क्विपि लिटयाम् ।

(५८) वेः स्कभ्नातेर्नित्यमिति (८।३।७७) श्नानिर्देशाद् नास्य षत्वम् ।

(५९) रधिजभोरचीति नुम् (७।१।६१) ।

(३।३।१०३) इत्येतदिह न क्रियते—जब्धिः। तथा च **धातुपारायणे** रभ राभस्य इत्यस्य क्तिन्नुदाहृतः—रब्धिः। जृम्भते। जजृम्भे। जरीजृम्भ्यते। जृम्भ्यम्। विजृम्भणम्। जृम्भा। विजृम्भितम् ॥३८९, ३९०॥

२६५. **शल्भ कत्थने**। शल्भते ॥३९१॥

२६६. **वल्भ भोजने**। वल्भते। वल्भितम् ॥३९२॥

२६७. **गल्भ धाष्टर्ये**। गल्भते। जगल्भे। प्रगल्भः। गल्भायते। अवगल्भते। अवगल्भाञ्चक्रे ॥३९३॥

२६८. **स्रन्सु प्रमादे**। स्रंसते। सस्रंसे। अस्रंसिष्ट। स्रंसित्वा स्रस्त्वा। स्रस्तम्। सास्रस्यते। **नीग्वञ्चु** (७।४।८४) इत्यादिना नीगागमो न भवति। तत्र ध्वन्सुसाहचर्य्यात् स एव स्रन्सुगृह्यते। **यङोऽचि च**(२।४।७४)इति लुक्। स चातो लोप (६।४।४८)मकृत्वा **सर्वविधिभ्यो लुग्विधिर्बलवानिति** न्यायात्। तेनातो लोपस्य स्थानिवद्भावादनुनासिकलोपो न भवति। सास्रंते इति। एवञ्च कृत्वा लोलुवाद्यर्थं **न धातुलोप** (१।१।४) इत्युक्तम्। द्युतादावप्ययं पठिष्यते। तस्यैव ध्वन्सुभ्रन्सुसाहचर्य्यान् नीगित्याहुः। दत्वे पुनरसाहचर्य्यम् इच्छन्ति—उखास्रदिति। संयोगान्तसाधर्म्येण सकारान्तोऽप्ययमत्र निर्दिश्यते। संयोगान्तप्रकरणानुरोधात् ॥३९४॥

२६९. **ष्टुभु स्तम्भे**। स्तोभते। प्रतिष्टोभते। तुष्टुभे। अतुष्टुभत्। स्तुभित्वा स्तोभित्वा स्तुब्ध्वा। स्तोभः। त्रिष्टुप्। अनुष्टुप्-अनुष्टुभम्। स्तुब्धम् ॥३९५॥

**इति आत्मनेभाषा उदात्ता अनुदात्तेतः। उदात्ता इति तिपिवर्जम्।**

**अथ परस्मैपदिनः पवर्गान्ताः**--

२७०. **गुपू रक्षणे**। गोपायति। जुगोप गोपायाञ्चकार ॥३९६॥

२७१. **धूप सन्तापे**। धूपायति। दुधूप धूपायाञ्चकार ॥३९७॥

२७२. **जप जल्प व्यक्तायां वाचि**।

२७३. **जप मानसे च**। जपति। भावगर्ह्यायां यङ्। जञ्जप्यते। जप्यम्। कर्णेजपः खलः। जपः। जाप्यन्तु बहुलवचनात्। जल्पति। जल्पाकः। जल्पः ॥३९८,३९९॥

२७४. **चप सान्त्वने** । चपति । चपो वृक्षः । तस्य विकारः । चापो धनुः, **तालादिभ्योऽण्** (४।३।१५२) इति ।।४००।।

२७५. **षप समवाये** । सपति । सिषापयिषति ।।४०१।।

२७६. **रप लप व्यक्तायां वाचि** । रपति । राप्यम् । लपति । लाप्यम्, **आसुयु** (३।१।१२६) इत्यादिना ण्यत् । अदुपधाः पूर्वोक्ता यतं भजन्ते । इमौ तु ण्यतमित्यर्थसाम्येऽपि जपिजल्पिभ्यां पृथगेतयोर्निर्देशः ।।४०२,४०३।।

२७७. **चुप मन्दायां गतौ** । चोपति । चुचोप ।।४०४।।

२७८. **तुप तुम्प त्रुप त्रुम्प तुफ तुन्फ त्रुफ त्रुन्फ हिंसार्थाः** । तोपति । तुतोप । तुतुपिषति तुतोपिषति । तुपितमनेन । तुम्पति । **प्रात् तुम्पतौ गवि कर्तरीति** पारस्करादिपाठात् (६।१।१५७) सुटि प्रस्तुम्पको वृषः (६०) । तुपितः । तुपितवान् । त्रोपति । त्रुम्पति । तोफति । तुम्फति । तुफित्वा तुम्फित्वा । त्रोफति । त्रुम्फति ।।४०५-४१२।।

२७९. **पर्व रफ रफि अर्ब पर्ब वर्ब मर्ब षर्ब कर्ब खर्ब गर्ब शर्ब चर्ब गतौ** । पर्बति । रफति । रम्फति । रम्फित्वा रफित्वा । अर्बति । आनर्ब । पर्बति । वर्बति । मर्बति । सर्बति । कर्बति । खर्बति । गर्बति । शर्बति । चर्बति ।।४१३-४२५।।

२८०. **कुबि आच्छादने** । कुम्बति । चुकुम्ब । कुम्बा ।।४२६।।

२८१. **लुबि कुबि अर्दने** । लुम्बति । तुम्बति । तुम्बी । लुम्बयति तुम्बयतीति चुरादिपाठात् ।।४२७,४२८।।

२८२. **चुबि वक्त्रसंयोगे** । चुम्बति । चुचुम्ब । चुम्बनम् । चुम्बः ।।४२९।।

२८३. **षृभु षृम्भु हिंसार्थौ** । सर्भति । सिसर्भिषति । सर्भित्वा

---

(६०) गवीति किम् ? प्रतुम्पति मेषः । कर्तरीति किम् ? प्रतुम्पति गां वृषलः । तुम्पताविति न तिङन्तानुकरणम् । अपि च धातुनिर्देशः । प्रस्तुम्पकः प्रस्तुम्पो गौः । लुङि प्रास्तुम्पीद् गौः । पूर्वं धातुरुपसर्गेण युज्यते, अन्तरङ्गत्वात् सुट् । ततो द्वित्वम् । तेन लिटि प्रतुस्तुम्प गौः । सनि प्रतुस्तुम्पिषति गौः । श्तिपा निर्देशाद् यङ्लुकि न । प्रतीतुम्पीति गौः ।

सृब्ध्वा । सिषर्भयिषति । सृम्भति । षिभु षिम्भु **इत्येके** । सेभते । सिम्भते । श्रिभु श्रिम्भु **इत्यन्ये** । श्रेभति । श्रिम्भति ॥४३०,४३१॥

२८४. **शुभ शुम्भ भाषणे हिंसायाञ्च** । शोभति । शुम्भति । शुशुम्भ । शुम्भयति ॥४३२,४३३॥

**इति परस्मैभाषा उदात्ता उदात्तेतः ।**

**अथानुनासिकान्ता आत्मनेपदिनः—**

२८५. **घिणि घुणि घृणि ग्रहणे** । घिणते । जिघिणे । जेघिण्यते । घुणते । जुघुणे । जोघुण्यते । घृणते । जघृणे । जरीघृण्यते ॥४३४-४३६॥

२८६. **घुण घूर्ण भ्रमणे** । घोणते । जुघुणे । जोघुण्यते । घुणः काष्ठकीटः । घोणा । घूर्णते । जुघूर्णे । घुणति घूर्णतीति तुदादिपाठात् ॥४३७,४३८॥

२८७. **पण व्यवहारे स्तुतौ च** । पणायति । पणायिष्यति । पणायाञ्चकार पेणे । पम्पण्यते । पण्यते । पणितम् । पण्यम् । पणः । आपणः । परिपाणः । स्तुतौ पनायति गुरुम् । आयप्रत्ययान्तादात्मनेपदं न भवति, धात्वन्तरत्वात् । अनुदात्तेत्त्वं केवले चरितार्थम् । स्तुत्यर्थेन पनिना साहचर्य्यात् स्तुत्यर्थस्यैव पणेरायप्रत्यय इति **केचिन्मन्यन्ते** । तेन शतस्य पणते, सहस्रस्य पणत इति भवति । **अन्ये** तु सामान्येन स्मरन्ति । तथा च भट्टिः '**न चोपलेभे वणिजां पणाया** इति ॥४३९॥

२८८. **पन च** । पनायति । पनायिष्यति पनिष्यते ॥४४०॥

२८९. **भाम क्रोधे** । भामते । वभामे । भामिनी । भाम्यते । **न्यासकारस्तु नुगतोऽनुनासिकान्तस्य** (७।४।८५) इति नुकमिच्छति वम्भाम्यत इति । **अन्ये** त्वत इति तपरकरणान्नुकं नेच्छन्ति । बाभाम्यते । (६१) ॥४४१॥

---

(६१) ङपुस्तके आत्रावश्यकाधमर्ण्ययोर्णिनिः (३।३।१७०) भामिनीति पाठः । कखमान्द्राजपुस्तकेषु तु आवश्यक इत्यादिर्नास्ति । माधवेन तु भामः क्रोधोऽस्या अस्तीति भामिनीति व्युत्पादितम् ।

२९०. **क्षमूष् सहने**। क्षमते। चक्षमे। क्षमिता क्षन्ता। क्षमा। क्षान्तः। क्षान्तवान्। क्षाम्यतीति दिवादिपाठात् ॥४४२॥

२९१. **कमु कान्तौ**। कामयते। कामयाञ्चक्रे चकमे। अचीकमत अचकमत। कामयित्वा कमित्वा। कान्तः। कामुकः। कामुकी कामुका। कम्रः। कमनः। कामः ॥४४३॥

**इति आत्मनेभाषा उदात्ता अनुदात्तेतः।**

**अथ परस्मैपदिन उच्यन्ते—**

२९२. **अण रण वण भण मण कण क्वण व्रण भ्रण शब्दार्थाः।** अणति। आणकः। अणः। अणकः। रणति। रणः। राणकः(६२)। वणति। ववाण, ववणतुः, ववणुः। भणति। अभाणीत् अभणीत्। बम्भण्यते। मणति। मणितम्। इन् मणिः। मणिकः। **ईदादिप्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्य** (१।१।२१ का०) इति "**मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम।**" कणति। चकाण। क्वणति। चक्वाण। निक्वणः निक्वाणः। व्रणति। भ्रणति ॥४४४—४५२॥

२९३. **ओणृ अपनयने**। ओणति। मा भवानोणिणत् ॥४५३॥

२९४. **शोणृ वर्णगत्योः**। शोणति। अशुशोणत्। शोणा शोणी ॥४५४॥

२९५. **श्रोणृ संघाते**। श्रोणति। श्रोणः ॥४५५॥

२९६. **श्लोणृ च** श्लोणति ॥४५६॥

२९७. **पैणृ गतिश्लेषणप्रेरणेषु**। पैणति (६३) ॥४५७॥

२९८. **ध्रण शब्दे**। ध्रणति। उपदेशे दन्त्यान्तोऽयमिति प्रागस्य निर्देशो न कृतः। तस्य प्रयोजनं यङ्लुकि दन्ध्रन्तीति यथा स्यात्। अन्यथा ष्टुत्वात् दंध्रण्टीति भवति ॥४५८॥

२९९. **कनी दीप्तिकान्तिगतिषु**। कनति। कान्तः। कनकम् ॥४५९॥

३००. **ष्टन वन शब्दे**। स्तनति। तिष्टानयिषति। अभिनि-

(६२) ङपुस्तकेऽत्र तत्र कुशल (५।२।६३) इत्यण्। न सामिवचन इति (५।४।५) ज्ञापकात् स्वार्थे कन्नित्यधिकः पाठो दृश्यते।

(६३) ङपुस्तके प्रैणृ प्रैणतीति पाठः।

ष्टानः । वनति । ववान, ववनतुः, ववनुः । अस्यैत्त्वाभ्यासलोपनिषेध-श्चान्द्रैरुदाहृतः ॥४६०,४६१॥

**३०१. वन षण संभक्तौ** । वनति । ववान । ववनतुः ववनुरिति । अर्थभेदात् पुनः पठ्यते । सनति । असीषणत् । सातिः सतिः सन्तिः ॥४६२,४६३॥

**३०२. अम गत्यादिषु** । अमति । अभ्यमीत् । आमः । आमयति । संभक्तिशब्दयोरनन्तरयोर्ग्रहणार्थमादिशब्दमिच्छन्ति ॥४६४॥

**३०३. द्रम हम्म मीमृ गतौ** । द्रमति । नित्यं कौटिल्ये यङ् दंद्रम्यते । दन्द्रमणः । हम्मति । जहम्म । मीमति । अमिमीमत् । मीमा ॥४६५—४६७॥

**३०४. चमु छमु जमु झमु अदने** । चमति । आचामति । आचामयति । चमित्वा चान्त्वा । आचान्तः । आचामः । छमति । जमति । संजमनम् । झमति । जिमि **केचित्** पठन्ति । जेमति । जेमनम् ॥४६८—४७१॥

**३०५. क्रमु पादविक्षेपे** । क्रामति । क्राम्यति । क्रमते । क्रम्यते । प्रक्रम्यते । प्रक्रमते । प्रक्रम्यते देवदत्तः । इन्प्रत्यये बाहुल्यादुपधाया इत्त्वञ्च--क्रिमिः । क्रमः । संक्रमः । संक्रामयति । संक्रामः **वा चित्तविरागे** (६।४।९१) इत्यतो वेत्यनुवृत्तेर्व्यवस्थितविभाषात्वान् **मितां ह्रस्वः** (६।३।९२) इति न भवति (६४) ॥४८२॥

**इति परस्मैभाषा उदात्ता उदात्तेतः ।**

**अथ यरलवान्ता आत्मनेपदिनः—**

**३०६. अय वय यय मय चय तय णय गतौ** । **३०७. णय रक्षणे च** । अयते । पलायते । पलायाञ्चक्रे । पल्ययते । पल्ययितः । पलायितः । आयः । असुन्—अयो लौहम् । **अनोश्माय** (५।४।९३) इत्यादिना अच्—कालायसम् । वयते । ववये । वयः । **नौवय** (४।४।९१) इत्यादिना यत्—वयसा तुल्यो वयस्यः । ययते । येये । मयते मेये ।

---

(६४) व्यवस्थितविभाषेति । तेन प्रियसुहृदि विभीषणे श्रियं संक्रमय्य वैरिण इत्यादि प्रयोगः । धुर्य्यान् विश्रामयतीत्यादावपि व्यवस्थितविभाषा ।

चयते । चेये । तयते । तेये । नयते । नेये ॥४७३—४७९॥

३०८. **दय दानगतिरक्षणहिंसादानेषु** । दयते । सर्पिषो दयते । "**दयाञ्चक्रे न राक्षसः** ।" दया । दयालुः ॥४८०॥

३०९. **रय गतौ** । रयते । रेये । रयितम् । रयः ॥४८१॥

३१०. **ऊयी तन्तुसन्ताने** । ऊयते । ऊयाञ्चक्रे । ऊयिता । ऊतः, ऊतवान् । निरूतम् ॥४८२॥

३११. **पूयी विशरणे दुर्गन्धे च** । पूयते । पुपूये । पूतः । पूतिः । पूयः ॥४८३॥

३१२. **क्नूयी शब्दे उन्दे च** । क्नूयते । चुक्नूये । क्नोपयति । चेलक्नोपम् । क्नूतः, क्नूतवान् ॥४८४॥

३१३. **क्ष्मायी विधूनने** । क्ष्मायते । चक्ष्माये । क्ष्मापयति । क्ष्मातः । क्ष्मातवान् । क्ष्मातिः ॥४८५॥

३१४. **स्फायी ओप्यायी वृद्धौ** । स्फायते । पस्फाये । **स्फायितञ्चि** (उण्, २।१३) इत्यादिना रक्—स्फारः । स्फारयतिः । स्फीतः, स्फीतवान् । स्फातिशब्दादर्शाद्यजन्तात् (द्र० ५।१।१२७) स्फातास्तण्डुलाः । आप्यायते । आपिप्ये । आप्यायि । आप्यायिष्ट । पीना यवाः । आपीनोऽन्धूः । आपीनमूधः । आपेपीयते ॥४८६,४८७॥

३१५. **तायृ सन्तानपालनयोः** । तायते । तताये । अतायि । अतायिष्ट ॥४८८॥

३१६. **शल चलनसंवरणयोः** । शलते । शेले । शालः । **कृशृशलिकलिगर्दिभ्योऽभच्** (उण्, ३।१२२) शलभः । शल्कम् । **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उण्,३।४३) शालूकम् । बहुलवचनादालुच् शलालु । **बलाकादयश्च** (उण्, ४।१४) इत्याकः— शलाका । शलतीति गतौ वक्ष्यते ॥४८९॥

३१७. **वल्ल संवरणे** । वलते । ववले । "**ववलिरे वलिरेचितमध्यमा** ।" वर्णेर्वलादेश इप्रत्ययश्च (उण् ४।१२५) वलिः । वली । वल्लते । वल्लिः । वल्ली (६५) । **रासिवल्लिभ्यामभच्** (उण्, ३। १२५) । वल्लभः ॥४९०,४९१॥

---

(६५) ङपुस्तके अजन्तत्वाद् गौरादिपाठान् ङीषि वल्लीति पाठः ।

३१८. **मल मल्ल धारणे**। मलते। मेले। घञर्थे कः—मलम्। **ज्योत्स्ना** (५।२।११४) इत्यादिना निपातनात् मलिनम्। माला। कर्मणि स्वभावाद् घञन्तोऽपि स्त्रियां वर्त्तते। संज्ञायां क्वुन् (उण्, २। ३३) गौरादित्वान् ङीष्—आमलकी। मल्लते। ममल्ले। मल्लः। मल्लिका। संज्ञायां क्वुन् (उण्, २।३३) ॥४९२,४९३॥

३१९. **भल भल्ल परिभाषणहिंसादानेषु**। भलते। बभले। भालूकः **उलूकादयश्च** (उण् ४।४८०) इति। भल्लते। बभल्ले। भल्लूकः ॥४९४,४०५॥

३२०. **कल शब्दसंख्यानयोः**। कलते। चकले। कालः ॥४९६॥

४२१. **कल्ल अव्यक्ते शब्दे**। कल्लते। कल्लः। ओलच्—कल्लोलः ॥४९७॥

३२२. **तेवृ देवृ देवने**। तेवते। अतितेवत्। देवते। अदिदेवत्। आदेवकः ॥४९८, ४९९॥

३२३. **शेवृ षेवृ गेवृ ग्लेवृ पेवृ मेवृ म्लेवृ सेचने**। शेवते। अशिशेवत्। सेवते। सिषेवे। असिषेवत्। गेवते। ग्लेवते। पेवते। मेवते। म्लेवते। अमिम्लेवत्। सेवृ खेवृ प्लेवृ इत्येके ॥५००—५०६॥

३२४. **रेवृ प्लेवृ गतौ**। रेवते। अरिरेवत्। रेवा। प्लेवते। पूर्वकौ रेवृप्लेवृ पवर्गे पठितौ स्पर्शान्तौ, इमौ तु यरलवान्तवर्गे पठितौ ईषत्-स्पृष्टौ वेदितव्यौ। एवं पेवतिमेवती च वेदितव्यौ। प्लव इत्येके। प्लवते। प्लेवे। पव इत्यन्ये। पवते। पेवे ॥५०७,५०८॥

**इति एते आत्मनेभाषा उदात्ता अनुदात्तेतः।**

**अथ परस्मैपदिनः यरलवान्ताः—**

३२५. **मव्य बन्धने**। मव्यति। ममव्य ॥५०९॥

३२६. **सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः**। सूर्क्ष्यति सुषूर्क्ष्य। ईर्क्ष्यति। ईर्क्ष्याञ्चकार। ईर्ष्यति इर्ष्याञ्चकार। ईर्ष्यियिषति, ईर्ष्यिषिषति✱। ईर्ष्या। (६६) ॥५१०—५१२॥

---

✱ ईर्ष्यतेस्तृतीयस्य द्वे भवतः। तृतीयस्य व्यञ्जनस्य, एकाचो वेति पक्षद्वयम् (६।१।३)। यु० मी०

(६६) क्विपि सूर्ट् सूर्क्षौ। ईर्ट्। ईर्ट्।

३२७. **हय गतौ** । हयति । हयः ॥५१३॥

३२८. **शुच्य अभिषवे** । शुच्यति । चुच्य इत्यपि पठन्ति ॥५१४॥

३२९. **हर्य्य गतिकान्त्योः** । हर्य्यति । जहर्य्य । हर्य्या अकारः (३।३।१०) ॥५१५॥

३३०. **अलँ वारणपर्य्याप्तिभूषणेषु** । अस्यानुनासिकः स्वरितोऽकार इत्संज्ञक इतीच्छन्ति । अतोऽयमुभयपदी । यरलवान्तप्रकरणानुरोधेन अयमत्रोभयतोभाषाऽपि पठितः । तद्द्योतनायानुनासिक उच्चार्य्यते । अलति अलते । क्वुन् —अलकम् । अलका कुवेरनगरी । इण्—अलिः । अली । ईकन्—अलीकम् ॥५१६॥

३३१ **ञिफला विशरणे** । फलति । पफाल । फुल्तमस्य फलितमस्य । प्रफुल्तः प्रफलितः । पम्फुल्यते । पम्फुलः । फुल्ता लता । उत्फुल्लम्, संफुल्लम् उपसंख्यानात् (द्र० ८।२।५५) ॥५१७॥

३३२. **मील स्मील क्ष्मील निमेषणे** । मीलति । अमिमीलत् अमीमिलत् । स्मीलति । क्ष्मीलति । श्मील इत्येके । श्मीलति ।५१८-५२०

३३३. **पील प्रतिष्टम्भे** । पीलति । पीलुः, मृगय्वादित्वात् कुः ॥५२१॥

३३४. **णील वर्णे** । नीलति । प्रणीलति । नीलम् । **नीलात् प्राण्योषध्योः** (४।४।४२ वा) इति ङीष्—नीली धेनुः, नीली ओषधिः । **वा संज्ञायाम्** (४।१।४२ वा)—नीला नीली वा दासी ॥५२२॥

३३५. **शील समाधौ** । शीलति । शीलम् । शीले भवा वृत्तिः शैली । शील उपधारणे चुरादौ । शीलयति ॥५२३॥

३३६. **कील बन्धे** । कीलति । कीलम् ॥५२४॥

३३७. **कूल आवरणे** । कूलति । कूलम् ॥५२५॥

३३८. **शूल रुजायां सङ्घाते च** । शूलति । शूलम् ॥५२६॥

३३९. **तूल निष्कर्षे** । तूलति । तूलम् । तूलिका ॥५२७॥

३४०. **पूल संघाते** । पूलति । पूलः । पञ्चपूली ॥५२८॥

३४१. **मूल प्रतिष्ठायाम्** । मूलति । मूलम् । **नौवय** (४।४।९१) इत्यादिना यत्—मूल्यम् । मूले भवो मौलः ॥५२९॥

३४२. **फल निष्पत्तौ** । फलति । फलितम् । फलम् ॥५३०॥

३४३. **चुल्ल हावकरणे** । चुल्लति । चुचुल्ल । चुल्लः । चुल्लिः चुल्ली ।।५३१।।

३४४. **फुल्ल विकसने** । फुल्लति । प्रफुल्लः । प्रफुल्लितः ।।५३२।।

३४५. **चिल्ल शैथिल्ये भावकरणे च** । चिल्लति । चिचिल्ल । चिल्लः पक्षी ।।५३३।।

३४६. **तिल गतौ** । तेलति । तिलः । क्वुन्—तिलकः ५३४।।

३४७. **वेलृ चेलृ केलृ खेलृ क्ष्वेलृ वेल्ल चेल्ल चलने** । वेलति । विवेल । अविवेलत् । वेला । चेलति । चेलम् । गौरादि ङीष्, पचादिषु चेलडिति पाठाद्वा स्त्रियां ङीप्—चेली । केलति । केलम् । केला । केलिः । कण्ड्वादित्वाद् यक्—केलायति । केलायितम् । खेलति । खेलयति । खेला । खेलायति (६७) । क्ष्वेलति । वेल्लति । चेल्लति ।।५३५—५४१।।

३४८. **पेलृ फेलृ शेलृ गतौ** । पेलति । अपिपेलत् । फेलति । फेला । शेलति ।।५४२—५४४।।

३४९. **खल स्खल सञ्चलने** । ३५०. **खल संशये✲ च** । खलति । खलः । स्खलति । चस्खाल । स्खलितम् ।।५४५—५४६।।

३५१. **गल अदने** । गलति । जगाल ।।५४७।।

३५२ **सल गतौ** । सलति । सालः । सलिलम् । इलच् ।।५४८।।

३५३. **दल विदारणे** । दलति । ददाल । दालः । दलनम् । दाडिमम् (६८) । कुद्दालः (६९)।।५४९।।

३५४. **श्वल श्वल्ल आशुगमने** । श्वलति अश्वालीत् श्वल्लति । शश्वल्ल । अश्वल्लीत् ।।५५०,५५१।।

३५५. **खोर्ऋ गतिप्रतिघाते** । खोरति । अचुखोरत् ।।५५२।।

---

(६७) कण्ड्वादिभ्यो यगिति (३।१।२७) स्वार्थे यकि केलायति खेलायतीति सिद्धम् ।

✲ 'खल संचये च' इत्यन्यत्र पाठः । यु० मी०

(६८) [डलयोरेकत्वस्मरणात्] दाडशब्दाद् घञन्तादिमच् ।

(६९) कु दालयतीति कुद्दालः । पृषोदरादिरिति माधवः ।

**३५६. खोलृ इत्यप्येके** । खोलति । खोलः ॥५५३॥

**३५७. धोर्ऋ गतिचातुर्य्ये** । धोरति । अदुधोरत् । **चलनशब्दार्थादकर्मकाद् युच्** (३।२।१६८)—आधोरणः । धोरितम् ॥५५४॥

**३५८. त्सर छद्मगतौ** । त्सरति । तत्सार, तत्सरतुः, तत्सरुः । अत्सारीत् । त्सरुः खड्गादि मुष्टिः । आकर्षादित्वात् त्सरुकः ॥५५५॥

**३५९. क्मर हूर्च्छने** । क्मरति । चक्मार । अक्मारीत् ॥५५६॥

**३६०. अभ्र वभ्र मभ्र चर गत्यर्थाः** । अभ्रति । आनभ्र । अभ्रचते (७०) । अभ्रम् । वभ्रति । वभ्रचते । मभ्रति । मभ्रचते । चरतिर्भक्षणेऽपि पठ्यते । चरति । अचारीत् । चरितम् । चरित्रम् । **उदश्चरः सकर्म**कात् (१।३।५३) इति तङ्—गेहमुच्चरते । **समस्तृतीयायुक्तात्** (१।३।५४)अश्वेन सञ्चरते । चञ्चूर्य्यते । चञ्चूर्त्ति चञ्चुरीति । आचरितव्यम् । आचरणीयम् । आचार्य्यः । **वा चरिचलि** (६।१।१२ वा०)इत्यादिना द्वित्वमागागमश्च—चराचरः । **व्रते** (३।२।८०) इति णिनिः—ब्रह्मचारी । सब्रह्मचारी ॥५५७—५६०॥

**३६१. ष्ठिवु निरसने** । ष्ठीवति । **ष्ठिवेरभ्यासस्य तो वेति तन्त्रान्तरीयम्** । टिष्टेव तिष्ठेव । ष्ठ्यूत्वा ष्ठेवित्वा । मधुलिट् ष्ठीवति (७१) । इवन्तत्वादिड् विकल्पः—तिष्ठेविषति तिष्ठ्यूषति । निष्ठेवनम् । निष्ठीवनम् ॥५६१॥

**३७२. जि जये** । जयति । विजयते । पराजयते । जिगाय । जेता । जापयति । जिगीषति । जयः । जय्यः । जेयः । जापः । मारजित् । **जिदृक्षि** (३।२।१५७)इति इनिः—जयी । क्वरप्—जित्वरः । खल्—सुजयः । उत्तरधातुसादृश्यानुरोधेनाजन्तोऽप्ययमत्र निर्द्दिश्यते ॥५६२॥

---

(७०) अभ्रचत इत्यनन्तरं चपुस्तके अभ्यत इत्येके इति च पाठोऽधिकः । तत्र कर्मणि अभ्रचते इत्यत्र (८।४।६४) हलो यमां यमि लोप इत्यनेन रेफलोप इति एके मन्यन्ते । अन्ये त्वत्र यमां यमीति यथासंख्यमेवेति गृह्णन्ति । तेनादित्यं हविरित्यादावेव लोपः । न तु माहात्म्यं तादात्म्यमित्यादौ इति वदन्ति ।

(७१) मधुलिट् ष्ठीवतीति ढः सि धुडिति (८।३।२९) धुड् नेति प्रदर्शनार्थम् । ष्ठीवतेः सत्त्वाभावात् ।

**३६३. जीव प्राणधारणे**। जीवति। अजिजीवत् अजीजिवत्। जीविका। जीविकाकृत्य कथयति। जीवनम्। जीव्यम्॥५६३॥

**३६४. पीव मीव तीव णीव स्थौल्ये**। पीवति। पिपीव। पीवरम्। पीवा। पीवित्वा। मीवति। तीवति। नीवति। प्रणीवति ५६४—५६७॥

**३६५. क्षिवु निरसने**। क्षेवति॥५६८॥

**३६६. उर्वी तुर्वी थुर्वी दुर्वी धुर्वी हिंसायाम्**। ऊर्वति। ऊः, उरौ, उरः। ऊर्णः, ऊर्णवान्। ऊर्णिः। तूर्वति। थूर्वति। दूर्वति। दूर्वा। धूर्वति। धूः, धुरौ, धुरः। तद्वहतीत्यर्थे **धुरो यड्ढकौ** (४।४।७७)—धुर्य्यः,धौरेयः। सर्वा चासौ धूश्चेति सर्वधुरा। तां वहतीति खः—सर्वधुरीणः। योगविभागाद् उत्तरधुरीणः। **एकधुराल्लुक् च**(४।४।७९)—एकधुरः एकधुरीणः॥५६९-५७३॥

**३६७. गुर्वी उद्यमने**। गूर्वति। गूः गुरौ, गुरः। गूर्णः, गूर्णवान् ॥५७४॥

**३६८. मुर्वी बन्धने**। मूर्वति। मूर्वा। तस्य विकारो मौर्वी। मूः, मुरौ। मूर्णम्॥५७५॥

**३६९. पुर्व पर्व मर्व पूर्तौ**। पूर्वति। पर्वति। मर्वति॥५७६-५७८।

**३७०. चर्व अदने**। चर्वति। चर्वा। चर्वितम्॥५७९॥

**३७१. भर्व हिंसायाम्**। भर्वति॥५८०॥

**३७२. कर्व खर्व गर्व दर्पे**। कर्वति। खर्वति। गर्वति। गर्वः। पूर्वकाः कवर्गादयः स्पर्शान्ताः (१।२७९ सूत्रस्थाः), अमी त्वीषत्स्पृष्टान्ता इति पुनश्च पठ्यन्ते॥५८१—५८३॥

**३७३. अर्व शर्व षर्व हिंसायाम्**। अर्वति। आनर्व। गन्धर्व इति शकन्ध्वादित्वात् पररूपम्। शर्वति। शर्वः। शर्वाणी। सर्वति। सर्वः। सर्वस्मै॥५८४—५८६॥

**३७४. इवि व्याप्तौ**। इन्वति। प्रेन्वति। इन्वाञ्चकार। णत्वविधौ नुमोऽनुस्वारोपलक्षणार्थत्वं द्रष्टव्यम् (८।४।२ काशिका) इत्युक्तत्वात् प्रेन्वनमिति नुम्व्यवाये णत्वं न भवति॥५८७॥

**३७५. पिवि मिवि णिवि स्रंसने**। पिन्वति। पिपिन्व। पिन्वः।

मिन्वति । निन्वति । प्रणिन्वति । निनिन्व ॥५८८—५९०॥

३७६. **हिवि दिवि धिवि जिवि प्रीणनार्थाः** । हिन्वति । जिहिन्व । दिन्वति । दिन्व्यते । धिनोति । धिनुतः । जिन्वति । जिजिन्व ॥५९१—५९४॥

३७७. **रिवि रवि धवि गत्यर्थाः** । रिण्वति । रण्वति । रण्वा । धन्वति । दधन्व । कनिन्— धन्वा मरुदेशः ॥५९५—५९७॥

३७८. **कृवि हिंसाकरणयोः** । कृणोति । चकृण्व ॥५९८॥

३७९. **मव बन्धने** । मवति । ममाव । मेवतुः । मेवुः । मूः, मुवौ, मुवः । यङ्लुगन्तात् क्विप्—मामूः ॥५९९॥

३८०. **अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्तिव्याप्त्यालिङ्गनहिंसादानभागवृद्धिषु** । अवति । आव । ऊः, उवौ, उवः । अविषः । ऊतिः ॥६००॥

**इति एते परस्मैभाषा उदात्ता उदात्तेतः** । उदात्तत्वमिदं जयतिवर्जम् । तस्यानुदात्तत्वात् ।

३८१. **धावु गतिशुद्धयोः** । धावति । धावते । धावित्वा धौत्वा । धौतः पटः । कथं गतौ धावितो धावितवानिति ? **यस्य विभाषा** (७।२।१५) इति निषेधस्यानित्यत्वादिटोऽनित्यता । बीजञ्च कृतिचृतिनृतीनामीदित्करणम् । तद्धि **श्वीदितो निष्ठायाम्** (७।२।१५) इति निषेधस्य नित्यत्यत्वे तु तेनैव सिद्धत्वादनर्थकं तत् स्यात् । वृषादित्वात् कलच् बाहुल्यादुपधाह्रस्वत्वम्—धवलः धवला । "**नीता येन निशा शशाङ्कधवला** ।" ण्वुल्—धावकः । ल्युट्—धावनम् । क्तिन्—धौतिः ॥६०१॥

**उभयतोभाष** इति उभयपदी भण्यते । स्वरितेत्त्वात् **स्वरितेदिति** । स्वरित इत्संज्ञकोऽस्येत्यर्थः । तस्य प्रयोजनं **स्वरितञितः कर्त्रभिप्राये क्रियाफले** (१।३।७२) इति आत्मनेपदम् । हिक्कादिषूभयपदिष्वयं न पठ्यते । तेषां कवर्गान्तप्रकरणानुरोधेन । अस्य चान्तःस्थान्तप्रकरणानुरोधात् ।

**अथ ऊष्मान्ता आत्मनेपदिनः कथ्यन्ते**—

३८२. **धुक्ष धिक्ष संदीपनक्लेशनजीवनेषु** । धुक्षते । दुधुक्षे । संधु-

क्षणम् । धिक्षते ॥६०२,६०३॥

३८३. **वृक्ष वरणे** । वृक्षते । वृक्षः ॥६०४॥

३८४. **शिक्ष विद्योपादाने** । शिक्षते । शिक्षा । शैक्षः **छत्रादिभ्यो णः** (४।४।६२) । शैक्षा ॥६०५॥

३८५. **भिक्ष याच्ञायां लाभेऽलाभे च** । भिक्षते । भिक्षा । भिक्षुः । भिक्षासमूहे **भिक्षादिभ्योऽण्** (४।२।३८) भैक्षम् ॥६०६॥

३८६. **क्लेश व्यक्तायां वाचि** । क्लेशते । चिक्लेशे ॥६०७॥

३८७. **दक्ष वृद्धौ शीघ्रार्थे च** । दक्षते । दक्षः । दक्षिणम् । **द्रुदक्षिभ्यामिनन्** (उण्, ३।५१) दक्षिणा ॥६०८॥

३८८. **दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु** । दीक्षते । दीक्षा । दीक्षितः ॥६०९॥

३८९. **ईक्ष दर्शने** । ईक्षते । ईक्षाञ्चक्रे । ईक्षणम् ॥६१०॥

३९०. **भाष व्यक्तायां वाचि** । भाषते । बभाषे । भाषा । ण्यत्—भाष्यम् । णिनिः—मितभाषी । भाषितम् ॥६११॥

३९१. **पर्ष वर्ष स्नेहने** । पर्षते । वर्षते । ववर्षे ॥६१२,६१३॥

३९२. **ग्लेषृ अन्विच्छायाम्** । ग्लेषते । अजिग्लेषत् ॥६१४॥

३९३. **ईष गतिहिंसादानेषु** । ईषते । ईषाञ्चक्रे । अकारः—ईषा । मनस ईषा मनीषा,पृषोदरादिः । व्रीह्यादित्वादिनिः—मनीषी । घञ्—प्रेषः । ण्यत् —प्रेष्यः । ण्वुल्—ईषिका । ईष्व इति वन्नन्तस्य निपातनमस्य । ईषतीत्यग्रे वक्ष्यते ॥६१५॥

३९४. **प्रेषृ यत्ने** । प्रेषते । अपिप्रेषत् ॥६१६॥

३९५. **येषृ प्रयत्ने** । येषते । अयियेषत् ॥६१७॥

३९६. **जेषृ णेषृ एषृ ह्लेषृ गतौ** । जेषते । अजिजेषत् । नेषते । प्रणेषते । प्रनिनेषते । एषते । अध्येषते अन्वेषते । मा भवानेषिषत् । ह्लेषते । "**ह्लेषा वाजिध्वनौ स्त्रियाम्**" ॥६१८-६२१॥

३९७. **रेषृ हेषृ अव्यक्तशब्दे** । रेषते । अरिरेषत् । हेषते । जिहेषे ।

अजिहेषत् । उपजिहेषिषते । **हेषा ह्रेषा च निःस्वन इत्यमरः** (७२)। ॥६२२,६२३॥

**३९८. कासृ शब्दकुत्सायाम्** । कासते । कासाञ्चक्रे । कासो रोगः । **रोगाख्यायां ण्वुल् बहुलम्** (३।३।१०८) उत्कासिका ॥६२४॥

**३९९. भासृ दीप्तौ** । भाषते । बभासे । अबीभसत् अबभासत् । भास्वरः । **भञ्जभासमिदो घुरच्** (३।२।१६१) भासुरम् । ग्रह्यादि-णिनिः— उद्भासी । क्विप्— भाः, भासौ, भासः । आत्मनेपदार्थम-कारानुबन्धे कर्तव्य ऋकारानुबन्धकरणमस्य ऋकारानुबन्धप्रकर-णात् । एवञ्चानुबन्धान्तरकरणञ्च न प्रकरणानुरोधेन ॥६२५॥

**४००. णासृ रासृ शब्दे** । नासते प्रणासते । नासा । नासिका । **अञ् नासिकायाः** (५।४।११८) इत्यच् नसादेशश्च—गोनसम् । **खुर-खराभ्याञ्च नस् वक्तव्यः** खुरणाः खरणाः । अच्प्रत्ययोऽपीष्यते— खुरणसः । **उपसर्गाच्च** (५।४।११९) इत्यच्नसादेशौ— प्रणसः । **वेर्ग्रो वक्तव्य** इति ग्रभावे **विग्रस्तु गतनासिकः** । **केचिन्ना**सिकापर्य्यायं नसाशब्दमिच्छन्ति । तथा च **वराहनक्षत्रपुरुषप्रकाशे** नसाशब्दः प्रयुक्तः । **भट्टि**काव्येऽपि **विनसा हतबान्धवेति** दृश्यते । न चासावुप-**सर्गाच्च** (५।४।११९) इति नसादेशे सिध्यति । **वेर्ग्रो वक्तव्य** इति ग्रादेशेन बाधितत्वात् (७३) । रासते । ररासे ॥६२६,६२७॥

**४०१. णस कौटिल्ये** । नसते । प्रणसते । नेसे । अनीनसत् । विनसः । विनासः ॥६२८॥

**४०२. भ्यस भये** । भ्यसते । बभ्यसे ॥६२९॥

**४०३. आङ् शसि इच्छायाम्** । आशंसते । आशशंसे । आशंस्यते । आशंसिता । आशंसितम् । आशंसा । आशंसुः । प्रशंसति, प्रशस्यते, प्रशस्त इति शन्स स्तुतावित्यस्य ॥६३०॥

**४०४. ग्रसु ग्लसु अदने** । ग्रसते । जग्रसे । ग्रसित्वा ग्रस्त्वा । ग्रस्तम् । पिण्डग्रः । ग्लसते ॥६३१,६३२॥

---

(७२) हेषा ह्रेषेति अश्वशब्दे । अमरेऽश्वप्रकरणात् ।

(७३) मतान्तरे भट्टियोगे विनासिकाशब्दे कर्मधारयः । तत उपलक्षणे तृतीया ।

**४०५. ईह चेष्टायाम्।** ईहते। ईहाञ्चक्रे। ऐहिष्ट। ईहा ॥६३३॥

**४०६ वहि महि वृद्धौ।** वंहते। **वंहेर्नलोपश्च** (उण्, १।१९) इत्युप्रत्ययः—बहुः। भूयान्। भूयिष्ठः। मंहते। महान्—**वर्त्तमाने पृषद्बृहन्महद्** (उण्, २।८५) इति अतिप्रत्ययः। महिष्ठो महीयान् महिमा ॥६३४,६३५॥

**४०७. अहि गतौ।** अंहते। आनंहे अंहिष्ट। अञ्जिहिषिते **नन्द्राः** (६।२।३) इति निषेधाद् हिशब्दस्य हित्वम्। अंहः ॥६३६॥

**४०८. गर्ह गल्ह कुत्सायाम्।** गर्हते। जगर्हे। जागर्ह्यते। गल्हते। जागल्ह्यते ॥६३७,६३८॥

**४०९. वल्ह प्राधान्ये।** वल्हते। ववल्हे अवल्हिष्ट। अवल्हिध्वम्। अवल्हिढ्वम् ॥६३९॥

**४१०. वर्ह वल्ह परिभाषणहिंसादानेषु।** वर्हते। ववर्हे। वर्हिणः। वर्हम्। वर्ल्हो। प्रवर्हः। वल्हते। वावल्ह्यते ॥६४०, ६४१॥

**४११. प्लिह गतौ।** प्लेहते। पिप्लिहे। प्लीहा प्लीहानौ।६४२।

**४१२. वेहृ जेहृ वाहृ प्रयत्ने।** वेहते। अविवेहत्। वेह्यते। जेहते। वाहते। वाढं भृशम्। वाहितम् ॥६४३—६४५॥

**४१३. माह माने।** माहते ॥६४६॥

**४१४. द्राहृ निद्राक्षये।** द्राहते। अदद्राहत् ॥६४७॥

**४१५. काशृ दीप्तौ।** काशते। चकाशे। अचकाशत्। आकारोपध ऋदित्प्रकरणादिहायं निर्दिश्यते। काश्यते इति दिवादिपाठात् ॥६४८॥

**४१६. ऊह वितर्के।** ऊहते। ऊहाञ्चक्रे। समूहति समूहते। समुह्यते। ऊहः। समूहः। समूहा। सामूहिकः—अध्यात्मादित्वाद् ठञ् ॥६४९॥

**४१५. गाहू विलोडने।** गाहते। जगाहे। गाहिष्यते घाक्ष्यते। अगाहिष्ट अगाढ। विगाढा विगाहिता। विगाढम्। विगाहः ॥६५०॥

**४१६. गृहू ग्रहणे।** गर्हते। जगृहे। गर्हिता गर्ढा। गृढः। गृढिः।

क्यप्—गृह्यम् । गृहाः । गृहम्—**गेहे कः** (३।१।१४४) इति गृह्णातेः कविधानं तस्यैव गृहमिति यथा स्यादिति द्योतयितुम्, गृहेर् मा भूदिति ।।६५१।।

४१७. **ग्लह इत्यप्येके** । तथा **चाक्षेषु ग्लहः** (३।३।७०) इत्यत्र ग्लहिः प्रकृत्यन्तरमस्तीत्युक्तम् । ग्लहते । जग्लहे । ग्लहः ।।६५२।।

४१८. **घुषि कान्तिकरणे** । घुंषते । जुघुंषे । घुंष्यते । उत्तरधातुसाधर्म्यानुरोधेनायमिह निर्दिश्यते ।।६५३।।

**इति आत्मनेभाषा उदात्ता अनुदात्तेतः** ।

**अथ परस्मैपदिनः**—

४१९. **घुषिर् शब्दार्थः** । घोषति । जुघोष । अघुषत् अघोषीत् । घुष्टम् । घुषिर् अविशब्दन इति चुरादौ । तस्य घोषयति ।।६५४।।

४२०. **अक्षू व्याप्तौ संघाते च** । अक्षति अक्ष्णोति । अक्षिता अष्टा । अष्टः, अष्टवान् । अक्षित्वा अष्ट्वा ।।६५५।।

४२१. **तक्षू त्वक्षू तनूकरणे** । तक्षति तक्ष्णोति । तक्षिता तष्टा । तक्षित्वा तष्ट्वा । तष्टम् । त्वक्षति । तत्वक्ष । त्वक्षिता त्वष्टा । त्वक्षित्वा त्वष्ट्वा । त्वष्टम् ।।६५६,६५७।।

४२२. **उक्ष सेचने** । उक्षति । उक्षाञ्चकार । उक्षा । प्रोक्षणम् । अभ्युक्षणम् ।।६५८ ।

४२३. **रक्ष पालने** । रक्षति । रिरक्षिषति । रारक्ष्यते ।।६५९।।

४२४. **णिक्ष चुम्बने** । निक्षति । णोपदेशप्रयोजनमुक्तम् प्राक् । प्रणिक्षति ।।६६०।।

४२५. **तृक्ष ष्टृक्ष णक्ष गतौ** । तृक्षति । ततृक्ष । तृक्षः । स्तृक्षति । तिष्टृक्षयिषति (७४) । नक्षति ।।६६१—६६३।।

४२६. **वक्ष रोषे** । वक्षति । ववक्ष । वक्षः क्रोडम् ।।६६४।।

४२७. **त्रक्ष संघाते** । त्रक्षति ।।६६५।।

४२८. **मक्ष इत्यप्येके** । मक्षति । मक्षिका ।।६६६।।

---

(७४) अणिजन्ते तु तिस्तृक्षिषतीति । स्तौतिण्योरेव षणीति (८।३।६१) नियमात् षत्वाभावः ।

४२९. **तक्ष त्वचने** । त्वचनं संवरणम् । तक्षति । तक्षिता ।।६६७।

४३०. **पक्ष परिग्रह इत्यप्येके** । पक्षति । पक्षः । पक्षणम् ।।६६८।।

४३१. **षूर्क्ष अनादरे**(७५) । सूर्क्षति । सुषूर्क्ष । सूर्क्षणम् ।।६६९।।

४३२. **काक्षि वाक्षि माक्षि काङ्क्षायाम्** । काङ्क्षति । चकाङ्क्ष । काङ्क्षा । वाङ्क्षति । पृषोदरादित्वात् ह्रस्वे "**तत्सन्धिः पुंसि वङ्क्षणः ।**" माङ्क्षति ।।६७०-६७५।।

४३३. **द्राक्षि ध्राक्षि ध्वाक्षि घोरवाशिते च** । द्राङ्क्षति । दद्राङ्क्ष । ध्राङ्क्षति । ध्वाङ्क्षति । ध्वाङ्क्षः ।।६७३—६७५।।

४३४. **चूष पाने** । चूषति । चुचूष ।।६७६।।

४३५. **तूष तुष्टौ** । तूषति । तूषा । तूषः ।।३७७।।

४३६. **पूष वृद्धौ** । पूषति । पूषितम् । पूषः ।।६७८।।

४३७. **मूष स्तेये** । मूषति । मूषकः । मृषा । मूषिका ।।६७९।।

४३८. **षूष प्रसवे** । सूषति । सुषूष ।।६८०।।

४३९. **यूष हिंसायाम्** । यूषति । यूषः । "**पीते यूष्णि निरामयः**" (७६) ।।६८१।।

४४० **जूष च** । जूषति ।।६८२।।

४४१. **भूष अलङ्कारे** । भूषति । बुभूष । भूषते कन्या स्वयमेव । भूषणम् ।।६८३।।

४४२. **ऊष रुजायाम्** । ऊषति । ऊषाञ्चकार । ऊषः । ऊषरम् ।।६८४।।

४४३. **ईष उञ्छे** । ईषति । ईषाञ्चकार । ईषा । प्रेष्यः । प्रेषः ।।६८५।।

४४४. **कष शिष जष झष शष वष मष रुष रिष हिंसार्थाः** । कषति । कषिष्यति । समूलकाषं कषति । निमूलकाषं कषति । सर्वंकषः । कष्टम् । कषितम् । निकषः । पत्काषी॥ । शेषति । शेष्टा ।

---

(७५) अत्र भट्टोजिः—"अनादरे इति तु क्वाचित्कोऽपपाठः ।" इति । अवज्ञावहेलनमसूर्क्षणमित्यमरः । सूर्क्षणमादरः । (७६) यूषो मांसरसविशेष इति माधवः । ॐ 'अथ पत्कापिणोयान्ति' (महा० ३।१।४८) । यु० मी०

जषति । झषति । झषो मीनः । वषति । मषति । रोषति । रोषिता रोष्टा । रुष्यतीति दिवादिपाठात् । रेषति । रेषिता रेष्टा ।।६८६—६९४।।

४४५. **भष भर्त्सने ।** शब्दकर्मकः । भषति । भषकः श्वा । शब्दः शब्दविशेषः कुक्कुरध्वनिः कर्म क्रियास्येति शब्दकर्मकः । सोऽप्यस्यार्थः ।।६९५।।

४४६. **उष दाहे ।** ओषति । उवोष ओषाञ्चकार । ऊष्मा—बहुलवचनाद दीर्घः ।।६९६।।

४४७. **जिषु विषु मिषु सेवने ।** जेषति । जेषिता । जेषित्वा जिषित्वा जिष्ट्वा । वेषति । मेषति । मेषः—अच् ।।६९७—६९९।।

४४८. **पुष पुष्टौ ।** पोषति । पोषिता । अपोषीत् । पोषितः । पुष्णाति पुष्यतीति गणान्तरपाठात् ।।७००।।

४४९. **श्रिषु श्लिषु प्रुषु प्लुषु दाहे ।** श्रेषति । श्रेषित्वा श्रिषित्वा श्रिष्ट्वा । प्रश्लेषति । प्राश्लेषीत् । प्रोषति । प्लोषति ।।७०१-७०४।

४५०. **पृषु वृषु मृषु सेचने ।** पर्षति । पृष्टम् । पृषितमित्यौणादिकम् । वर्षति । वृष्टिः । **अज्विधौ भयादीनामुपसंख्यान**मित्यच्—वर्षम् । **वृषभो वर्षणा**दिति भाष्यलेखनाद वर्षणमिति च । ४५१. **मृषु सहने च ।** मृष्यतीति दिवादित्वात् । मर्षति । मर्षित्वा मृषित्वा ।।७०५—७०७।।

४५२. **घृषु संघर्षे ।** घर्षति । जघर्ष । घृष्टम् ।।७०८।।

४५३. **हृषु अलीके ।** हर्षति । हृषिताः केशा हृष्टा वा । हृष तुष्टाविति दिवादौ हृष्यति ।।७०९।।

४५४. **तुस ह्रस ह्लस रस शब्दे ।** तोसति । तुतोस । ह्रसति । ह्रसितम् । ह्रस्वः । ह्लसति । रसति । रसितं मेघगर्जनम् ।।७१०—७१३।।

४५५. **लस श्लेषणक्रीडनयोः ।** लसति । विलासी । विलासः ।।७१४।।

४५६ **घस्लृ अदने ।** घसति । घस्ता । घस्रम् । घस्मरः ।।७१५।।

४५७. **जर्ज चर्च झर्झ परिभाषणसन्तर्जनयोः ।** जर्जति । जर्जन्ती ।

चर्चति । झर्झति । चर्च झर्झ इत्येतौ तुदादावपि पठ्येते । इह तु स्वरार्थं पठितौ । अर्थानुरोधाच्चोष्मान्तवर्गेऽपि एते पठ्यन्ते ।।७१६–७१८।।

४५८. **पिसृ पेसृ गतौ** । पेसति । अपिपेसत् । पिसः । पेस्वरः । पेसति । पेपेस्यते ।।७१९,७२०।।

४५९. **हसे हसने** । हसति । जहास । अहसीत् । हसः हासः (७७) **स्वनहसोर्वा** (६।३।६२) इत्यब् वा ।।७२१।।

४६०. **कस गतिशासनयोः** । कसति ।।७२२।।

४६१. **णिश समाधौ** । नेशति । प्रणेशति । निशा । सप्तमीबहुवचने निशासु निट्सु निच्शु (७८) ।।७२३।।

४६२. **मिश मश शब्दे रोषकृते च** । मेशति । मिमेश । मशति । मशकः क्वुन् ।।७२४,७२५।।

४६३. **शव गतौ** । शवति । शवः । शावकः । शावः । क्विप्—शौः । शकारवत्प्रकरणादयमत्र निर्दिश्यते ।।७२६।।

४६४. **शश प्लुतगतौ** । शशति । शशाश शेशतुः शेशुः । शशः मृगभेदः । तद्योगाच् शशी चन्द्रः ।।७२७।।

४६५. **शसु हिंसायाम्** । शसति । विशशास । विशशसतुः । विशशसुः । विशशसिथ । **न शसददवादिगुणानाम्** (६।४।१२६) इत्येत्वाभ्यासलोपप्रतिषेधः । **तकिशसि** (३।१।९७) इति यत्—शस्यम् । शस्त्रम् । **हन्त्यर्थाश्चेति** चुरादिगणसूत्रात् णिच्—शासयति । शास्यम् ।।७२८।।

४६६. **शंसु स्तुतौ** । कथने च । शंसति । नृशंसः क्रूरः । ब्राह्मणाच्छंसी ऋत्विक् । ब्राह्मणाद् वेदभागादाकृष्य शंसति स्तौतीति **ब्राह्मणाच्छंसि** (६।३।२ वा) इत्युपसंख्यानादलुक् । प्रशंसा । शस्तम् । शंस्यम् । शस्यम् ।।७२९।।

४६७. **चह परिकल्कने** । चहति । अचहीत् ।।७३०।।

---

(७७) हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूत्यपथः सितीकृत इति नैषधे ।

(७८) व्रश्चभ्रस्जेत्यादौ धातुसाहचर्य्याद् धातोरेव (८।२।३६) शकारस्य षत्वम् । प्रातिपदिकानां शकारस्य तु जश्त्वमिति मतेन निच्शु ।

४६८. **मह पूजायाम्** । महति । ममाह । मही गौरादित्वात् ।७३१

४६९. **रह त्यागे** । रहति । रराह । रहः । रहयतीति चुरादिपाठात् ॥७३२॥

४७०. **रहि गतौ** । रंहति । ररंह । रंहः असुन् ॥७३३॥

४७१. **तृह तृहि दृह दृहि वृह वृहि वृद्धौ** । तर्हति । ततर्ह । तृंहति । ततृंह । दर्हति । ददर्ह । दृंहति । दृंह्यते । ददृंह । वर्हति । वर्हिः । वृहि शब्दे च । वृंहति । ववृंह । वृंहितम् । वृंहणम् । परिवृढः ॥७३४-७३९॥

४७२. **तुहिर् दुहिर् अर्दने** । तोहति । अतोहीत् अतुहत् । दोहति । अदुहत् अदोहीत् ॥७४०,७४१॥

४७३. **तुहिर् उहिर् इत्येके** । तोहति । ओहति । औहीत् औहत् ॥७४२॥

४७४. **अर्ह पूजायाम्** । अर्हति । आनर्ह । अर्हा । अर्हः ॥७४३॥

**इति परस्मैभाषा उदात्ता उदात्तेतः** । इति ऊष्मान्तान् परस्मैपदिनः परिसमाप्य अङ्विधौ संकलिता **द्युतादय आत्मनेपदिन उपदिश्यन्ते**—

४७५. **द्युत दीप्तौ** । द्योतते । दिद्युते । अद्युतत् अद्योतिष्ट । द्युतित्वा द्योतित्वा । दिद्युतिषते । दिद्योतिषते । द्योतितमनेन द्युतितमनेन । देद्युत्यते । द्योतनः । द्युतिः । **द्युतिगमिजुहोतीनां द्वे च** (३।२।१७८ वा) इति क्विप्, द्विर्वचनम्—दिद्युत् । **भ्राजभास** (३।२।१७७) इति क्विप्—विद्युत् ॥७४४॥

४७६. **श्विता वर्णे** । श्वेतते । अश्वितत् अश्वेतिष्ट । श्वेतः । श्वित्रम् **स्फायितञ्चीति** रक् । श्वित्तम् । श्वित्तमनेन श्विततमनेन श्वेतितमनेन । श्वितः ॥७४५॥

४७७. **ञिमिदा स्नेहने** । मेदते । मिमिदे । मिन्नः । मिन्नमस्य मेदितमस्य । मेदिता । मेदः । मेद्यतीति दिवादिपाठात् ॥७४६॥

४७८. **ञिष्विदा स्नेहनमोचनयोः** । स्वेदते । सिष्विदे । सिस्वेदयिषति । स्विन्नः । स्विन्नमस्य स्वेदितमस्य । स्विद्यतीति ञिष्विदा गात्रप्रक्षरण इत्यस्य दैवादिकस्य ॥७४७॥

४७९. **रुच दीप्तौ**। अभिप्रीत्याञ्च। रोचते। रुरुचे। अरुचत् अरोचिष्ट। रोचनः। इसुन्—रोचिः। रुचिः। घञ्—रोकः। अरोकः। अरोकदन् अरोकदन्तः **विभाषा श्यावारोक** (५।४।१४४) इति दत्रादेशः ॥७४८॥

४८०. **घुट परिवर्तने**। घोटते। जुघुटे। अघुटत् अघोटिष्ट। घोटकः ॥७४९॥

४८१. **रुट लुट लुठ प्रतीघाते**। रोटते। लोटते। लोठते। लुठ्यतीति लुट विलोडन इत्यस्य। लोटतीति परस्मैपदिषूक्तम्। पूर्वं पाठात् ॥७५०-७५२॥

४८२. **शुभ दीप्तौ**। शोभते। अशुभत् अशोभिष्ट। शुभम्। शुभ्रम्। शोभनम्। **गुरोश्च हलः** (३।३।१०४) इति चकारस्यानुक्तसमुच्चयार्थत्वात् शोभा ॥७५३॥

४८३. **क्षुभ सञ्चलने**। क्षोभते। चुक्षुभे। क्षुब्धः क्षुभितः। क्षुभ्नाति क्षुभ्यतीति गणान्तरपाठात् ॥७५४॥

४८४. **णभ तुभ हिंसायाम्**। नभते प्रणभते। नेभे। तोभते। तुतुभे। नभ्यति तुभ्यतीति गणान्तरे पाठात् ॥७५५, ७५६॥

४८५. **स्रन्सु भ्रन्शु ध्वन्सु अधःपतने, अवस्रंसने च**। स्रंसते। सस्रंसे। व्यस्रसत् व्यस्रंसिष्ट। स्रस्तम्। स्रंसित्वा स्रस्त्वा। सनीस्रस्यते। सनीस्रंसः। उखास्रत्। भ्रंशते। बभ्रंशे। भ्रंशित्वा भ्रष्ट्वा। भ्रष्टः। भ्रष्टिः। भ्रश्यते इति भ्रशो रूपम्। ४८६. **ध्वन्सु गतौ च**। ध्वंसते। दध्वंसे। अध्वसत् अध्वंसिष्ट ॥७५७—७५९॥

४८७. **स्रम्भु विश्वासे**। विस्रम्भते। सस्रम्भे। अस्रभत् अस्रम्भिष्ट। विस्रब्धः ॥७६०॥

४८८. **वृतु वर्त्तने**। वर्त्तते। ववृते। वर्त्स्यति वर्तिष्यते। अवृतत् अवर्त्तिष्ट। विवृत्सति विवर्त्तिषते। वर्त्तित्वा वृत्त्वा। वृत्तम्। वर्त्तिष्णुः। वर्त्तनः। वृत्तिः। वार्त्ता ॥७६१॥

४८९. **वृधु वृद्धौ**। वर्धते। ववृधे। वर्त्स्यति वर्धिष्यते। विवृत्सति विवर्धिषते। दन्त्योष्ठोऽस्य वकार इति भष्भावो न भवति। वर्धित्वा वृद्ध्वा। वृद्धम् ॥७६२॥

४९०. **शृधु शब्दकुत्सायाम्** । शर्धते । शश्रृधे । शर्द्धः । शर्धञ्जहाः ॥७६३॥

४९१. **स्यन्दू स्रवणे** । स्यन्दते । सस्यन्दे । **अनुविपर्य्यभिनिभ्यः** (८।३।७२) इति वा षत्वम्—अनुस्यन्दते तैलम्, अनुष्यन्दते वा । सन्त्स्यति स्यन्दिष्यते । अस्यदत् अस्यन्त्त अस्यन्दिष्ट । स्यन्दित्वा स्यन्त्त्वा । प्रस्यन्द्य । **क्त्वि स्कन्दिस्यन्दोः** (६।४।३१) इति नलोपनिषेधः । स्यन्दिता स्यन्त्ता । प्रस्यन्नः प्रस्यन्नवान् । स्यदो जवः ॥७६४॥

४९२. **कृपू सामर्थ्ये** । कल्पते । चक्लृपे । कल्पितासे कल्प्तासे कल्प्तासि । कल्प्स्यति कल्पिष्यते कल्प्स्यते । अक्लृपत् । अकल्पिष्ट अक्लृप्त । चिक्लृप्सते चिकल्पिषते चिक्लृप्सति । चलीक्लृप्यते । क्लृप्तः । प्रक्लृप्तिः । कल्पः । प्रकल्पना ॥७६५॥

**वृत्** इति वृतु वर्त्तन इत्यस्माद् भूते क्विप् । वृत्तं सम्पन्नं पर्य्यवसितमिति यावत् । द्युतादीनां परिसमाप्तौ सङ्केतो वृत्करणमिदम् ।

**सम्प्रति घटादयः षित्त्वार्थं मित्संज्ञार्थञ्चोपदिश्यन्ते—**

४९३. **घट चेष्टायाम्** । घटते । जघटे । घटयति । अघटि अघाटि । घाटं घाटं, घटं घटम् । घटा । उद्घाटयतीति घट सङ्घात इत्यस्य चौरादिकस्य रूपम् ॥७६६॥

४९४. **व्यथ भयचलनयोः** । व्यथते । विव्यथे । व्यथयति । अव्यथि अव्याथि । व्याथं व्याथं, व्यथं व्यथम् । व्यथा ॥७६७॥

४९५. **प्रथ प्रख्याने** । प्रथते । प्रथयति । प्रथा । अपप्रथत् । पृथिवी **प्रथेः षिवन् संप्रसारणञ्च** (उण् १।१४८) ॥७६८॥

४९६. **प्रस विस्तारे** । प्रसते । प्रसयति । प्रसा ॥७६९॥

४९७. **म्रद मर्दने** । म्रदते । म्रदयति । अमम्रदत् । म्रदा ॥७७०॥

४९८. **स्खद स्खदने** । स्खदते । चस्खदे । स्खदयति । स्खदा ॥७७१॥

४९९. **क्षजि गतिदानयोः** । क्षञ्जते । चक्षञ्जे । अक्षाञ्जि अक्षञ्जि । क्षाञ्जं क्षाञ्जं, क्षञ्जं क्षञ्जम् । क्षञ्जेर्घटादौ मित्त्वार्थः

पाठः । तत्सामर्थ्यादुपधाग्रहणानुवृत्तावपि सत्यां **चिण्णमुलोर्दीर्घोऽन्यतरस्याम्** (६।४।९३) इत्युपधादीर्घविकल्पो❀ भवति । षित्त्वफलं तु क्षञ्जेत्यफलमेव । **गुरोश्च हलः** (३।३।१०३) इत्यनेनैव सिद्धत्वात् । एवं दक्षिकक्षिकन्दिक्रन्दीनामपि ।।७७२।।

**५००. दक्ष गतिहिंसयोः** । दक्षते । अदक्षि अदाक्षि । दाक्षं दाक्षं, दक्षं दक्षम् । दक्षा । दक्ष वृद्धौ शीघ्रार्थे चेति अनुदात्तेत्सु पठितम् ।।७७३।।

**५०१. क्रप कृपायां गतौ** । क्रपते । क्रपयति । अस्य घटादौ पाठो मित्त्वार्थः । न तु षित्त्वार्थः । यतः कृपेति **क्रपेः संप्रसारण**(३।३।१०४, ग०सू०)इति भिदादिपाठेनैव सिध्यति । क्रप कृपेत्येके पठन्ति ।७७४।।

**५०२. कदि क्रदि क्रद क्लद वैक्लव्ये** । कन्दते । अकान्दि अकन्दि । कन्दा । कन्दिशीकः कान्दिशीकः । क्रन्दते । अक्रान्दि अक्रन्दि । क्रन्दा । एतावर्थान्तरे परस्मैपदिनावुक्तौ । तयोश्चापि घटादित्वम् । क्रदते । क्रदयति । क्रदा । क्लदते । क्लदयति । क्लदा ।।७७५-७७८।।

**५०३. जित्वरा सम्भ्रमे** । त्वरते । त्वरयति । अतत्वरत् । त्वरा । तूर्णः त्वरितः । तूर्णमस्य त्वरितमस्य । तूः तुरौ तुरः । अनुदात्तेत्त्वार्थमकारे वक्तव्ये दीर्घान्तोपादानं वैचित्र्यार्थम् । **रुष्यमत्वर** (७।२।२८) इति निष्ठायां प्रतिपदं विकल्पितव्यम् (७९) ।।७७९।।

(1) **घटादयः षितः** । एते अनुक्रान्ता घटादयः षकारानुबन्धा भवन्ति । तत्र षित्त्वफलं च **षिद्भिदादिभ्योऽङ्** (३।३।१०४) इत्यङ् प्रत्ययः ।

**इति आत्मनेभाषा उदात्ता अनुदात्तेतः** । एवं घटादीनात्मनेपदिनो मित उक्त्वा **परस्मैपदिन उच्यन्ते**—

**५०४. ज्वर रोगे** । ज्वरति । जज्वार । ज्वरयति । अज्वरि

---

❀ 'इत्यनुपधादीर्घविकल्पः' इति पाठेन भाव्यम् । नह्यत्रोपधायामकारः । द्र० 'अस्य पाठोऽनुपधाया अपि चिण्णमुलोर्दीर्घार्थः । क्षीरतरङ्गिणी १।५१७।। यु० मी०

(७९) आत्मनेपदार्थमकारानुबन्धे कर्तव्ये दीर्घोपादानं वैचित्र्यार्थम् । रुष्यमत्वरेति निष्ठायां प्रतिपदविकल्प इष्यत इति चपुस्तके पाठान्तरम् ।

अज्वारि । ज्वारं ज्वारं, ज्वरं ज्वरम् । संज्वारी, संज्वारिणौ । जूः, जूरौ, जूरः, ॥७८०॥

**५०५. गड सेचने** । गडति । गडयति । गडकः । ण्वुलाश्रया वृद्धिर्न भवति, णिलोपस्य स्थानिवत्त्वात् ॥७८१॥

**५०६. हेड वेष्टने** । हेडति । हिडयति । अहीडि अहिडि । हिडं हिडं, हीडं हीडम् ॥७८२॥

**५०७. वट भट परिभाषणे** । वटति । वटयति । भटति । भटयति । वट वेष्टने भट भृतावित्येतयोस्तु वाटयति भाटयतीति ॥७८३,७८४॥

**५०८. णट नृत्तौ** । नटति प्रणटति । प्राणाटि प्राणटि । नटिका । णट गतावित्येके । नतावित्यन्ये । नटयतीति नट नृत्तावित्यनेन । नट अवस्यन्दन इति चुरादौ नाटयतीति ॥७८५॥

**५०९. ष्टक प्रतीघाते** । स्तकति । स्तकयति । स्तक्यम् । तिष्टकयिषति ॥७८६॥

**५१० चक तृप्तौ** । चकति । चकयति । चक तृप्तिप्रतीघातयोरित्यस्य चकते चकयति ॥७८७॥

**५११. कखे हसने** । कखति । अकखीत् । कखयति ॥७८८॥

**५१२. रगे शङ्कायाम्** । रगति । अरगीत् । रगयति ॥७८९॥

**५१३. लगे सङ्गे** । लगति । अलगीत् । लगयति । लग्नं लगितम् (८०) संसक्तमित्यर्थः ॥७९०॥

**५१४. ह्लगे ह्लगे षगे ष्ठगे संवरणे** । ह्लगति । अह्लगीत् । ह्लगयति । ह्लगति । अह्लगीत् । ह्लगयति । सगति । असगीत् । सगयति । सिषगयिषति । स्थगति । स्थगयति । तिष्ठगयिषति ॥७९१-७९४॥

**५१५. कगे नोच्यते** । अस्यायमर्थ इति नोच्यते । क्रियासामान्यमस्यार्थ इति यावत् । इह शास्त्रे नोच्यत इत्येके । कगति । कगयति ॥७९५॥

**५१६. अक अग कुटिलायां गतौ** । अकति । अकयति । अगति । अगयति ॥७९६,७९७॥

---

(८०) क्षुब्धस्वान्तेति (७।२।१८) निष्ठायां वेट्त्वम् ।

**५१७. कण रण गतौ** । कणति । कणयति । अकणीत् अकाणीत् । कणिका । रणति । अरणीत् अराणीत् । रणयति । अण रणेत्यादौ कण रणौ शब्दार्थौ । कणति । रणति । तत्र काणयति । राणयति ।।७९८, ७९९।।

**५१८. चण शण श्रण दाने** । गतावित्येके । चणति । चणयति । शणति । शणयति । श्रणति । श्रणयति ।।८००-८०२।।

**५१९. श्रथ श्लथ क्लथ क्रथ हिंसार्थाः** । श्रथति । श्रथयति । श्लथति । श्लथयति । क्लथति । क्लथयति । क्रथति । क्रथयति । **जासिनिप्रहणनाटक्राथपिषां हिंसायाम्** (२।३।५६) इत्यत्र नाटक्राथेति निपातनाद् वृद्धिरिति **जयादित्ये**नोक्तम् । चौरस्योत्क्राथयति । स हि क्रथिं चुरादौ न पठति । **अन्ये** तु क्रथ हिंसायामिति चुरादौ पठित्वा तस्यैतद्रूपमिति वर्णयन्ति । क्लथति । क्लथयति ।।८०३-८०६।।

**५२०. चन च** । ककारेण हिंसायामित्यपेक्षते । चनति । चनयति । चनकम् ।।८०७।।

**५२१. वनु च नोच्यते** । वनति । वनित्वा । वान्त्वा । वान्तम् । वनयति । वानयति (८१) । उपवनयति ।।८०८।।

**५२२. ज्वल दीप्तौ** । ज्वलति । जज्वाल । ज्वलयति ज्वालयति (८२) । प्रज्वलयति । ज्वालः, ज्वलः । उत्तरत्रास्य पाठो ज्वलादिकार्य्यार्थः ।।८०९।।

**५२३. ह्वल ह्मल चलने** । ह्वलति । जह्वाल । अह्वालीत् । ह्वलयति ह्वालयति । प्रह्वलयति । ह्मलति । जह्माल । ह्मलयति ह्मालयति । प्रह्मलयति ।।८१०,८११।।

**५२४. स्मृ अध्याने** । स्मृ चिन्तायामित्युक्तम् । स च स्मरतिरनेकार्थोऽभ्युपेयते । आध्याने स्मरणविशेषे मित्त्वार्थमिह पठ्यते ।

---

(८१) ग्लास्नावनुवमाञ्चेति गणसूत्रादनुपसर्गान्मित्त्वं वा ।

(८२) ज्वलह्वलह्मलनमामनुपसर्गाद्वेति गणसूत्रान्मित्त्वं वा । ज्वलादिकार्य्यञ्च ज्वलितिकसन्तेभ्यो ण इति (३।१।१४०) वा णप्रत्ययः । ज्वलः ज्वालः ।

स्मरति । स्मरयति । आध्यानमुत्कण्ठास्मरणम् । अतोऽन्यत्र स्मारयति । विस्मारयति । स्मारकः शब्दार्थ इति स्मरणसामान्यविवक्षायाम् ॥८१२॥

**५२५. दृ भये** । दृ विदारण इति क्र्यादिः । तस्येह भये मित्त्वार्थः पुनश्च पाठः । दृणन्तं प्रयुङ्क्ते दरयति । भयादन्यत्र दारयति । धात्वन्तराभ्युपगमे दरतीत्येके ॥८१३॥

**५२६. नॄ नये इत्यप्येके** । नरयति । अन्येषां नारयति ॥८१४॥

**५२७. श्रा पाके** । श्रातिश्रायत्योः समान्यानुकरणमिदम् । श्रपयति । शृतं क्षीरम् । पाकादन्यत्र श्रापयति ॥८१५॥

**५२८. मारणतोषणनिशामनेषु ज्ञा** । निशामनं चक्षुःसाधनं ज्ञानम् । शम लक्ष आलोचन इत्यस्य चौरादिकस्य रूपमेतत् । मारणादिष्वर्थेषु जानातिर्मिद् भवति । ज्ञपयति । मारयति तोषयति निशामयतीति वा । एभ्योऽन्यत्र ज्ञापयत्यर्थम् । विज्ञापयति स्वामिनम्। ज्ञापयत्यर्थं ज्ञीप्स्यमान इति । ज्ञप मिच्चेति चुरादिपाठात् । **न्यासकारस्तु** श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः (१।४।३४) इत्यत्र निशामनशब्देन ज्ञानमुच्यत इति मतान्तरेणोक्तवान् । तथा च तज्ज्ञापयत्याचार्य्यं इत्यादि प्रयोगा न सिध्यन्ति । मतान्तरेण तु तत्सिद्धिर्वेदितव्या ॥८१६॥

**५२९. कम्पने चलिः** । चल कम्पने इति ज्वलादौ । स च कम्पनेऽर्थे मित् । चलयति वातः शाखाम् । कम्पनादन्यत्र चालयति सूत्रम् (८३) चालयति शूद्रं सार्थं वा ॥८१७॥

**५३०. छदिरूर्जने** । छद अपवारण इति चुरादिः । तस्योर्जने बले प्राणने च मित्संज्ञार्थमिह पाठः । छदयति । स्वार्थिको वा णिच् । छदन्तं प्रयुङ्क्त इति वा । अपवारणे छादयति । ऊर्जनादन्यत्र हि छादयति ॥८१८॥

**५३१. जिह्वोन्मथने लडिः** । लड विलासे इत्ययं जिह्वयोन्मथने मित् । लडयति जिह्वया । जिह्वोन्मथनादन्यत्र लाडयति बालकम् । उन्मथनमुत्क्षेपणम् । डलयोरैक्याद् **लालयेत् पञ्चवर्षाणी**त्यादि साध ॥८१९॥

---

(८३) क्षिपतीत्यर्थः ।

५३२. **मदी हर्षग्लेपनयोः** । हर्षग्लेपनयोर्माद्यतिर्मित् । मदयति । हर्षयति ग्लेपयति वा (८४) । आभ्यामन्यत्र मादयति ॥८२०॥

५३३. **ध्वन स्वन शब्दे** । स्वन अवतंसन इत्येके । ध्वनयति । स्वनयति । शब्दावतंसनाभ्यामन्यत्र ध्वानयति । स्वानयति ॥८२१, ८२२॥

(2) **घटादयो मितः** । अमी घटादयो मित्संज्ञकाः स्युः । मितां ह्रस्वः (६।४।९२), चिण्णमुलोर्दीर्घोऽन्यतरस्याम् (६।४।९३) इति मित्संज्ञाफलम् ।

(3) **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** । जायतिजीर्य्यतिक्नस्यतिरञ्जतयो मितः । अमन्ताश्च । जनयति । जरयति । क्नसयति । **रञ्जेर्णौ मृगरमणे** (६।४।२४, वा) इत्यनुनासिकलोपे **अत उपधायाः** (७।३।११६) इति वृद्धौ मित्त्वे **मितां ह्रस्वः** (६।४।९२) रजयति मृगान् । अमन्ताः गमयति । रमयति । यमयति । अमन्ताश्चेत्यकारोपादानात् तिम ष्टिम आर्द्रीभाव इत्येतस्य तेमयति ष्टेमयतीति ह्रस्वो न भवति ।

(4) **ज्वलह्वलह्मलनमामनुपसर्गाद्वा** । अनुपसर्गात् परेषां ज्वलादीनां वा मित्संज्ञा । सोपसर्गाणां तु नित्यमेव, पूर्वविधानात् । ज्वलयति ज्वालयति । ह्वलयति ह्वालयति । ह्मलयति ह्मालयति । नमयति नामयति । इह नित्यम्—प्रज्वलयति, प्रह्वलयति, प्रह्मलयति, प्रणमयति ।

(5) **ग्लास्नावनुवमाञ्च** । एषाञ्चानुपसर्गाणां मित्संज्ञा वा स्यात् । उभयत्र विभाषेयम् । ग्ला स्ना इत्येतयोरप्राप्ते वनुवम्योः प्राप्ते । तत्र वनतेर्वनु च नोच्यते इत्यनेन प्राप्ता वमेश्चामन्तत्वात् । ग्लपयति ग्लापयति । स्नपयति स्नापयति । वनयति वानयति । वमयति । वामयति । सोपसर्गात् तु यथाप्राप्तम् । प्रग्लापयति । प्रस्नापयति । प्रवनयति । प्रवमयति ।

(6) **न कम्यमिचमाम्** । नैते मितः । कामयते । अमन्तत्वात् प्राप्ते णिङोऽभावपक्षे णिच्प्रत्यये मित्संज्ञाप्रतिषेधः । कामयति । आमयति । चामयति ।

(८४) ग्लेपनं दैन्यम् ।

(7) **शमोऽदर्शने** । नेति वर्तते । दर्शनार्थे शमिर्न मित् । निशामयति रूपम् । अन्यत्र शमयति रोगम् । निशमयति वचः शृणोति (८५) ।

(8) **यमोऽपरिवेषणे** । यमिर्न मित् । यामयति । आयामयते परिवेषणे तु यमयति ब्राह्मणान् । कथं नियमयति संयमयति ? **तत्करोति** (३।१।२६ वा०) इति प्रातिपदिकाण्णिच्प्रत्ययः ।

(9) **स्खदिरपपरिभ्याञ्च** । अपस्खादयति । परिस्खादयति आभ्यामन्यत्र स्खदयति । प्रस्खदयति (८६) ।

**५३४. फण गतौ** । मिदित्यपेक्षते । नेति निवृत्तम् । अनुचितत्वात् असम्भवाच्च । पूर्वमयं न पठ्यते, फणादिकार्य्यानुरोधात् । फणति । फणयति । पफाण । फेणतुः पफणतुः । फेणुः । पफणुः । फाण्टम् फणितम् ।

**वृत्** । एतस्मात् पूर्वं वृत्करणमित्येके । फाणयति । संफाणयति । वृदिति समस्तघटादिगणपरिसमाप्त्यर्थम् ।।८२३।।

**इति परस्मैभाषा उदात्ता उदात्तेतः** । एते घटादिषु ज्वलादयः परस्मैपदिन इत्यर्थः ।

**५३५. राजृ दीप्तौ** । राजति राजते । रेजतुः रराजतुः रेजाते रराजाते । रराज रेजे रराजे । अरराजत् । **इति उभयतोभाषः स्वरितेदुदात्तः** । फणादिकार्य्यानुरोधेन हिक्कादिष्वयं न पठ्यते ।।८२४।।

**५३६. टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ** । त्रयोऽपि ट्वितः । भ्राजते । भ्रेजे बभ्राजे । अबभ्राजत् अबिभ्रजत् । भ्राजथुः । आत्मनेपदार्थमकारानुबन्धे कर्तव्ये ऋकारानुबन्धकरणमृदित्प्रकरणानुरोधात् । भ्राशते भ्राश्यते । भ्रेशे बभ्राशे । अबभ्राशत् । भ्राशथुः । भ्लाशते भ्लाश्यते । बभ्लाशे भ्लेशे । अबभ्लाशत् । भ्लाशथुः ।।८२५-८२७।।

---

(८५) निशामय तदुत्पत्तिं विस्तराद् गदतो ममेत्यत्र त्वार्षः प्रयोगः । मतान्तरेण वात्र शृण्वित्यर्थः ।

(८६) भ्वादिगणे गणसूत्राणि नवसंख्यकानि । तान्यत्र १।२ इत्यादि संख्याभिश्चिह्नितानि । एवञ्चान्यत्र वेदितव्यम् । विशेषतश्चुरादिगणे । भ्वादौ घटादयः षित इति हि प्रथमं सूत्रम् ।

इति आत्मनेभाषा उदात्ता अनुदात्तेतः । फणादिष्वेते भ्राजृप्रभृतय आत्मनेपदिन इत्यर्थः ।

**५३७. स्यमु स्वन ध्वन शब्दे** । स्यमति । सस्याम, स्येमतुः सस्यमतुः, सस्यमुः स्येमुः । स्यमित्वा स्यान्त्वा । स्यान्तम् । सेसिम्यते । स्वनति । विष्वणति अवष्वणति मांसम् । विस्वनति मृदङ्गः । अवस्वनति वीणा । स्वेनतुः सस्वनतुः, स्वेनुः सस्वनुः । स्वनः स्वानः । निस्वनः निस्वानः । एते फणादयः । ध्वनति । दध्वान, दध्वनतुः, दध्वनुः । ध्वनिः ॥८२८-८३०॥

**५३८. षम ष्टम वैक्लव्ये** । समति । सिषमयिषति । स्तमति । तस्ताम । तिष्टमयिषति ॥८३१,८३२॥

**अथ णप्रकृतयो ज्वलादयः--**

**५३९. ज्वल दीप्तौ** । ज्वलति । जज्वाल, जज्वलतुः । प्राज्वालीत् । ज्वालः ज्वलः **ज्वलिति कसन्तेभ्यो णः** (३।१।१४०) । ज्वलनः । ज्वाला ॥८३३॥

**५४०. चल कम्पने** । चलति । चचाल, चेलतुः, चेलुः । चालः चलः । चलनः ॥८३४॥

**५४१. जल धान्ये** । जलति । जालं जलम् ॥८३५॥

**५४२. टल ट्वल वैक्लव्ये** । टलति । ट्वलति ॥८३६,८३७॥

**५४३. ष्ठल स्थाने** । स्थलति । तिष्ठालयिषति । स्थलम् । विष्ठलम् । कुष्ठलम् । स्थली स्थला । स्थालम् । स्थाली ॥८३८॥

**५४४. हल विलेखने** । हलति । हलं हालम् ॥८३९॥

**५४५. णल गन्धे** । नलति । प्रणलति । प्रणालः प्रणलः । प्रणालः —करणे गत्यर्थाद् घञ् ॥८४०॥

**५४६. गल गरणे** । गलति ॥८४१॥

**५४७. पल गतौ** । पलति । पालं पलम् । वृषादिभ्यः कलच्— पललम् । बाहुल्यात् कालच् । पलालः ॥८४२॥

**५४८. बल प्राणने धान्यावरोधे च** । बलति । बबाल । बेलतुः । बेलुः । बालं बलम् ॥८४३॥

५४९. **पुल महत्त्वे** । पोलति । पोलः पुलः । विपुलम् ॥८४४॥

५५०. **कुल सन्ताने बन्धुषु च** । कोलति । कोलः । कुलम् ।८४५।

५५१. **शल हुल पत्लृ गतौ** । शलति । शालं शलम् । शललम् । ५५२. **हुल हिंसासंवरणयोश्च** । चकारोऽन्वाचये । गतावस्य प्रायः प्रयोगः । क्वचित् तु हिंसासंवरणयोः । होलति । पतति । अपप्तत् । आपात्यो देवदत्तः । आपात्यं देवदत्तेन । पतितः । पातुकः । पत्रम् । पतेरङ्गच् प्रत्ययः—पतङ्गः । **पतिचण्डिभ्यामालञ्** (उण्, १।११४) पातालम् । **पत स्थश्च** (उण्,४।१२) इति इनिः—पन्थाः ।८४६-८४८।

५५३. **क्वथे निष्पाके** । क्वथति । अक्वथीत् । क्वाथः क्वथः ॥ ८४९॥

५५४. **पथे गतौ** । पथति । अपथीत् । पाथम् पथम् ॥८५०॥

५५५. **मथे विलोडने** । मथति । अमथीत् । माथः मथः ॥८५१॥

५५६. **टुवम उद्गिरणे** । वमति । ववाम । ववमतुः । ववमुः । वमथुः । वान्तम् (८७) । वामः वमः । वमित्वा ॥८५२॥

५५७. **भ्रमु चलने** । भ्रमति । भ्रम्यति । भ्राम्यतीति शमादिपाठात् । णप्रत्ययेऽचि च भ्रमः, वृद्धिनिषेधात् । ज्वलादिषु पाठः **अच्कावशक्तौ** (६।२।१५७) इति नञ उत्तरस्यान्तोदात्तार्थः । भ्रमः । भ्रान्तः । भ्रान्तिः । **पोरदुपधाद्** (३।१।९८) इति यत्—भ्रम्यम् ।८५३।

५५८. **क्षर सञ्चलने** । क्षरति । अक्षारीत् ॥८५४॥

**इति परस्मैभाषा उदात्ता उदात्तेतः** । स्यमादयः परस्मैपदिन इत्यर्थः ।

५५९. **षह मर्षणे** । सहते । सेहे । विषहते । **परिनिविभ्यः** (८।३।७०) इति षत्वम् । **सिवादीनां वाड्व्यवायेपि** (८।३।७१) इति वा षत्वम् । न्यषहत न्यसहत । सर्वसहः । सहिता सोढा । सोढ इति षत्वनिषेधः । विसोढः । विसोढुम् । साहः सहः । **"स एवायं नागः सहति**

---

(८७) आदितश्चेति (७।२।१६) चकारस्यानुक्तसमुच्चयार्थत्वादाश्वस्तः वान्त इति वृत्तिकारः । तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टिरिति मेघदूतम् । वेमुश्च केचिद्रुधिरमित्यार्षः ।

**कलभेभ्यः परिभवम्**''। "**ततः प्रोदसहन् सर्वे**" इति तु युजादिपाठात् (८८) ॥८५५॥

**५६०. रमु क्रीडायाम्**। रमते। रेमे। विरमति। व्यरंसीत् व्यरंसिष्टाम्। रन्ता। रमणः। रतिः। रामः रमः। अस्योदित्त्वं **केचिदि**च्छन्ति। तेषां मते रमित्वा रत्वा ॥८५६॥

**इति आत्मनेभाषौ**। **अनुदात्तौ इमौ**। सहिरमी आत्मनेपदिनौ ज्वलादिकार्यार्थमिह पठ्येते।

**५६१. षद्लृ विशरणगत्यवसादनेषु**। सीदति। निषीदति। विषीदति। ससाद। निषसाद। विषसाद। सेदतुः। सत्ता। असदत्। सादः, सदः। भावे घञ्—अवसादः। उपसेदिवान्। सद्रुः। निषद्वरः—**नौ सदेः** (उण्, २।२८०) इति ष्वरच् ॥८५७॥

**५६२. शदलृ शातने**। शीयते। शशाद। शेदतुः। शत्स्यति। अशदत्। शत्ता। शत्रुः। शादः शदः। शाद्वलः। शद्लृ शातन इति विशीर्णतायां वर्त्तते। शातनं विषयभावेन निर्द्दिश्यते। प्रसिद्धिवशात् ॥८५८॥

**५६३. क्रुश आह्वाने रोदने च**। क्रोशति। चुक्रोश। अक्रुक्षत्। क्रोष्टा। क्रोशः क्रुशः ॥८५९॥

**५६४. कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु**। कोचति। कोचिता। कोचकः। कोचः कुचः। कुचं वृणोतीति **कर्मण्यण्** (३।२।१) **अन्येषामपि दृश्यत** (६।२।१३७) इति पूर्वपदे दीर्घत्वम्—कूचवारः। सोऽभिजनोऽस्येति कौचवार्य्यः ॥८६०॥

**५६५. बुध अवगमने**। (बोधने)। बोधति। बोधः बुधः। बुध्यत इति दिवादिपाठात् ॥८६१॥

**५६६. रुह जन्मनि प्रादुर्भावे**। रोहति। रुरोह। रोढा। अरुक्षत्। पङ्केरुहम्। अवरोहः। रोहः रुहः। आरूढम् ॥८६२॥

**५६७. कस गतौ**। कसति। चकास। कसिता। कस्वरः। कासः

---

(८८) युज पृच संयमन इति चुरादिष्वाधृषीयाः युजादयो विभाषितणिचकाः।

कसः । पृषोदरादित्वात् सिकताः । नित्यबहुवचनान्तोऽयं स्त्रीलिङ्गः (८९) ॥८६३॥

**वृदिति** । ज्वलादिपरिसमाप्तेः ।

**इति परस्मैभाषा उदात्ता उदात्तेतः** । एते सदादयः परस्मैपदिनः ।

**अथोभयपदिनोऽनुक्रमेणोपदिश्यन्ते हिक्कादयः** —

**५६८. हिक्क अव्यक्ते शब्दे** । हिक्कति हिक्कते । **गुरोश्च हलः** (३।३।१०३) हिक्का ॥८६४॥

**५६९. अञ्चु गतौ याचने च** । अञ्चति अञ्चते । अञ्चित्वा अक्त्वा । गतावस्य पूर्वपाठे फलं कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदम् । अचु इत्येके । अचति । अचते ॥८६५॥

**५७०. टुयाचृ याच्ञायाम्** । याचति याचते । अययाचत् । याचथुः । याच्ञा । डुयाचृ इत्यप्येके । याचित्रिमम् ॥८६६॥

**५७१. रेटृ परिभाषणे** । रेटति रेटते । अरिरेटत् । रेटयते ॥८६७॥

**५७२. चते चदे याचने** । चतति । चतते । अचतीत् । चतुरः । चातकः । चत्वारः । चदति चदते । अचदत् । अचदीत् ।८६८, ८६९।

**५७३. प्रोथृ पर्य्याप्तौ** । प्रोथति प्रोथते । प्रोथ्यते । प्रोथयति । अपुप्रोथत् । प्रोथः॥८७०॥

**५७४. मिदृ मेदृ मेधाहिंसयोः** । मेदति मेदते । मिद्यते । मेदः । मेदकः । मेदति मेदते । मेद्यते ॥८७१,८७२॥

**५७५. मेधृ सङ्गमे च** । मेधति मेधते । मेधा । मेध्यम् । मेधिः — **सर्वधातुभ्य इः** ॥८७३॥

**५७६. णिदृ णेदृ कुत्सासन्निकर्षयोः** । नेदति नेदते । प्रणिद्यते । नेदति नेदते । प्रणेद्यते ॥८७४, ८७५॥

**५७७. शृधु मृधु मृधु उन्दे** । शर्धति शर्धते । सर्धति सर्धते । सृधुः । मर्धति मर्धते । मृधं संग्रामः ॥८७६—८७८॥

---

(८९) पृषोदरादित्वादित्यादि ङपुस्तक एव केवले दृश्यते । नित्यबहुवचनान्त इति तु न । प्रायिकं तु बहुवचनम् । एकापि सिकता तैलदाने न समर्थेति भाष्यप्रयोगात् (१।१। आ० १) ।

५७८. **बुधिर् बोधने**। बोधति बोधते । अबोधिष्ट अबोधीत् अबुधत्। पूर्वत्र पाठोऽस्य कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थः ॥८७९॥

५७९. **उबुन्दिर् निशामने** । निशामनमालोचनम् । बुन्दति बुन्दते । बुबुन्द बुबुन्दे । अबुदत् अबुन्दीत् अबुन्दिष्ट । बुन्दित्वा बुन्त्वा । बुन्दकः । बुन्नम् ॥८८०॥

५८०. **वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु** । वेणति वेणते । अविवेणत् । इन् । वेणिः । प्रवेणिः ॥८८१॥

५८१. **खनु अवदारणे** । खनति खनते । चखान चख्ने । खानकः । खनित्वा खात्वा । खातम् । खनित्रम् । ष्वुन्—खनकः । खनकी । **खनो घ च** (३।३।१२५) इति घञ्, घश्चाधिकरणे । आखानः आखनः । डोडरौ— आखः । आखरः । इकः—आखनिकः । इकवकः—आखनिकवकः ॥८८२॥

५८२. **चीवृ आदानसंवरणयोः** । चीवति चीवते । अचिचीवत् । तीवृ इति **केचित्** । चीपृ **इत्यन्ये** । चीपति चीपते ॥८८३॥

५८३. **चायृ पूजानिशामनयोः** । चायति चायते । अचचायत् । चेकीयते— यङि **चायः कीः** (६।१।३५) इति कीभावः ॥८८४॥

५८४. **व्यय गतौ** । व्ययति । व्ययते । अव्ययीत् अव्ययिष्ट ॥८८५॥

५८५. **दाशृ दाने** । दाशति दाशते । अददाशत् । दाशः ॥८८६॥

५८६. **भेषृ भये** । भेषति भेषते । अबिभेषत् ॥८८७॥

५८७. **भ्रेषृ भ्लेषृ चलने** । भ्रेषति भ्रेषते । भ्लेषति भ्लेषते ।८८८, ८८९॥

५८८. **अस गतिदीप्त्यादानेषु** । असति असते । **"लावण्य उत्पाद्य इवास यत्नः ।"** आसे । अष **इत्येके** । अषति अषते ॥८९०॥

५८९. **स्पश बाधनस्पर्शनयोः** । स्पशति स्पशते । अपस्पशत् । स्पशः ॥८९१॥

५९०. **लष कान्तौ** । लषति लषते । अभिलष्यति अभिलष्यते देव-

दत्तः । ललाष लेषे । अपलाषी—**अपे च लषः** (७।२।११४) इति घिनुण् । अभिलाषः ।।८९२।।

**५९१. चष भक्षणे** । चषति चषते । चाषः किकीदिविः । चषकं पानभाजनम् ।।८९३।।

**५९२. कष हिंसायाम्** । कषति कषते ।।८९४।।

**५९३. छष हिंसायाम्** । छषति छषते ।।८९५।।

**५९४. झष आदानसंवरणयोः** । झषति । झषते । झषः ।।८९६।।

**५९५. भक्ष भक्षणे** । भक्षति भक्षते । भ्रक्ष इत्येके । भ्रक्षति भ्रक्षते । भ्लक्ष इत्येके । भ्लक्षति भ्लक्षते (९०) ।।८९७।।

**५९६. दासृ दाने** । दासति दासते । अददासत् ।।८९८।।

**५९७. माहृ माने** । माहति माहते । ममाह ममाहे । अमाहीत् । अममाहत् । महितव्यः । दुर्माहितः ।।८९९।।

**५९८. गुहू संवरणे** । गूहति गूहते । निगूहिता निगोढा । घोक्ष्यति घोक्ष्यते । गूहिष्यति गूहिष्यते । अगूहीत् अघुक्षत् अगूहिष्ट अघुक्षत अगूढ । अगूढाः अघुक्षथाः । अघूढ्वम् अघुक्षध्वम् । अगुह्वहि अघुक्षावहि । **लुग् वा** (७।३।७३) इत्यादिना क्सस्य लुक् । सन् - जुघुक्षति । गुह्यम् गोह्यम् । काकगूहास्तिलाः । गुहः । गूढः । गूढिः । गूहिमम् । गुहा ।।९००।।

इति हिक्कादीन् हलन्तान् गुहूपर्य्यन्तानुभयपदिनो निर्दिश्याजन्तानपि **इदानीमुभयपदिनो निर्दिशति**—

**५९९. श्रिञ् सेवायाम्** । श्रयति श्रयते । शिश्राय शिश्रिये । श्रयिता । शिश्रयिषति शिश्रीषति । घञ् -श्रायः । **एरच्** (३।३।५६) —श्रयः । श्रितः । श्रित्वा । **क्विब्वचि** (३।२।१७८ वा) इति दीर्घः संप्रसारणञ्च । श्रीः । श्रीति ङीबन्तोऽपीति **केचित्** ।

---

(९०) अत्र भक्ष भक्षण इति मैत्रेयवचनमनार्षम् । गतिबुद्धीत्यत्र (१।४।५२) भक्षेरहिंसार्थस्य प्रतिषेध इति वार्त्तिकस्य भक्षयति पिण्डीं देवदत्तः, भक्षयति पिण्डीं देवदत्तेनेति ण्यन्ताद्धेतुमण्णिचि प्रयोज्यस्य कर्मत्वाभवं दर्शयता भाष्यकारेणस्य परित्यगात् ।

इति **एते उदात्ताः** ।

**अतः परमनुदात्ताः** । अनुक्तमप्यनुदात्तत्वमुपदेशपारम्पर्य्यादवगम्यते ।

६००. **हृञ् हरणे** । हरति हरते । जलधिमनुहरते सरः । जहार जह्रे । हर्त्ता । हरिष्यति हरिष्यते हारिष्यते । अहार्षीत् अहृत । अहृढ्वम् । **धि च** (८।२।२५) इति सिचो लोपः । अहारि । अहृषाताम् अहारिषाताम् । कवचहरः । कर्महरः । हारः । पचाद्यच्—हरः । हरिणः । **हृश्याभ्यामितन्** (उण्, ३।९३) । हरितम् । हरिता हरिणी ॥६०२॥

६०१. **भृञ् भरणे** । भरति भरते । **सनीवन्तर्ध** (७।२।४९) इति सनि वेट् विभरिषति बुभूर्षति । भर्त्ता । भृत्यः । भार्य्या । भारः । भृत्या । भृतिः । बिभर्तीति श्लुविकरणपाठेन जौहोत्यादिकस्य रूपम् ॥६०३॥

६०२. **धृञ् धारणे** । धरति धरते । पचादिपाठादच्–भूधरः । दुर्धरः । धर्मः । कल्याणधर्मा । धृङ् अवध्वंसन इत्यस्याकर्त्रभिप्राये क्रियाफलेऽपि धरत इति ॥६०४॥

६०३. **णीञ् प्रापणे** । नयति नयते । अजां नयति ग्रामम् । प्रणयति । निनाय निन्ये । निन्यतुः । नेता । ग्रामणीः । नेत्रम् । नीतिः ॥६०५॥

**इति उभयतोभाषाः** । एते हिक्कादय उभयपदिन इत्यर्थः ।

**अथानुदात्ताः परस्मैपदिनोऽजन्ताः कथ्यन्ते—**

६०४. **धेट् पाने** । धयति । दधौ । अधासीत् अदधत् अधात् । धाता । उद्धयः । स्तनन्धयी । धय इति **केचित्** । धायः । धात्री ।६०६

६०५. **ग्लै हर्षक्षये** । ग्लायति । ग्लाता । ग्लायात् ग्लेयात् । ग्लानिः । सुग्लः । ग्लानः ॥६०७॥

६०६. **म्लै गात्रविनामे** (९१) । म्लायति । मम्लौ । अम्लासीत् । अम्लासिष्टाम् । म्लानः ॥६०८॥

६०७. **द्यै न्यक्करणे** । द्यायति । दद्यौ । द्यानः ॥६०९॥

---

(९१) गात्रविनामः कान्तिहानिरित्यर्थः ।

६०८. **द्रै स्वप्ने** । द्रायति । दद्रौ । निद्रा । द्राणः ॥६१०॥

६०९. **ध्रै तृप्तौ** । ध्रायति । दध्रौ । ध्राणः । ध्रायः ॥६११॥

६१०. **ध्यै चिन्तायाम्** । ध्यायति । दध्यौ । ध्याता । धीः । ध्यातः ॥६१२॥

६११. **रै शब्दे** । रायति कीरः । मयूरः । रात्रिः—**राशदिभ्याम् त्रिप्** (उण्, ४।६८) ॥६१३॥

६१२. **स्त्यै ष्ट्यै शब्दसंघातयोः** । द्विष्पाठसामर्थ्यादिकस्य षोपदेशत्वम् । स्त्यायति । तिष्ट्यासति । प्रस्तीतः प्रस्तीमः । स्त्री । कुस्त्री । दुःस्त्री । तद्भावः कौस्त्रम्, दौःस्त्रम् (९२) ॥६१४,६१५॥

६१३. **खै खदने** । खायति । चखौ ॥६१६॥

६१४. **क्षै जै षै क्षये** । क्षायति । **क्षायो मः** (८।२।५०) इति मत्वम्—क्षामः । जायति । सायति । सिषापयिषति ॥६१७—६१९॥

६१५. **कै गै शब्दे** । कायति । चकौ । गायति । जगौ । अगासीत् । गेयो माणवकः । छन्दो गेयं माणवकेन । छन्दोगः । छान्दोग्यम् । गायनः । माथकः । गीतम् । गीतिः । रायतिना सह निर्देशो न कृतः । स हि पूर्वं यण्वत्प्रकरणे निर्दिष्टः । वैचित्र्यार्थो वास्य पृथङ् निर्देशः ॥६२०,६२१॥

६१६. **श्रै स्रै पाके** । श्रायति । शृतम् । स्रायति । सस्रौ ॥६२२, ६२३॥

६१७. **पै ओवै शोषणे** । पायति । पायात् । पपौ । पास्यति । अपासीत् । पिपासति । वायति । ववौ । वानम् । आवाययति ॥६२४, ६२५॥

६१८. **ष्टै वेष्टने** । स्तायति । तिष्टापयिषति । ॥६२६॥

६१९. **ष्णै वेष्टने** (९३) । स्नायति । सिष्णापयिषति ॥६२७॥

---

(९२) युवादित्वादण् । क्वचित् तिस्त्यासतीति उदाहृतम् । अत्र माधवः —"यत्तु मैत्रेयसम्मताकारकाश्यपादिभिरुक्तं धात्वादेः षः सः (६।१।६४) इति सत्वाभाव इति तदज्दन्त्यपराः षादयः षोपदेशा इति लक्षणस्याव्याप्तिप्रसङ्गादुपेक्ष्यम्" इति ।

(९३) ङपुस्तकेऽत्र ष्णै वेष्टने । स्नायति । सिष्णापयिषतीति पाठः । अत्र

६२०. **दैप् शोधने** । दायति । ददौ । अवदातम् मुखम् ।।६२८।।

६२१. **पा पाने** । पिबति । पपौ । अपात् । पास्यति । पाययति पाययते । पानम् । पीतम् । पिपासति । पिपाययिषति । पात्रम् ६२९।।

६२२. **घ्रा गन्धोपादाने** । जिघ्रति । जघ्रौ । अघ्रात् अघ्रासीत् । अजिघ्रपत् अजिघ्रिपत् । जेघ्रीयते ।।६३०।।

६२३. **ध्मा शब्दाग्निसंयोगयोः** । धमति । दध्मौ । देध्मीयते । उद्धमः । नाडिन्धमः । उद्ध्मानकम्—अधिकरणल्युडन्तात् कः ६३१।।

६२४. **ष्ठा गतिनिवृत्तौ** । तिष्ठति । संतिष्ठते । वितिष्ठते । अवतिष्ठते । तस्थौ । अभितष्ठौ । अधिष्ठास्यति । अध्यष्ठात् । स्थापयति । अतिष्ठिपत् । तिष्ठासति । तेष्ठीयते । निष्ठा । भूमिष्ठः । द्विष्ठः । त्रिष्ठः । उपस्थानीयो देवदत्तः । उपस्थानीयं देवदत्तेन । स्थास्नुः । स्थायुकः । स्थावरः । स्थायः । स्थितिः । स्थानम् । स्थिरः । स्थेयान् ।।६३२।।

६२५. **म्ना अभ्यासे** । मनति । म्नायते । मम्नौ । निम्नम् । सुम्नम् । द्युम्नम् । आम्नायः । आम्नाती व्याकरणे ।।६३३।।

६२६. **दाण् दाने** । प्रयच्छति । संप्रयच्छते दास्या मालाम् । प्रणियच्छति । प्रददौ । दाता । दत्तम् ।।६३४।।

६२७. **ह्वृ कौटिल्ये** । ह्वरति । जह्वार । जह्वरतुः । जह्रुः ।६३५

६२८. **स्वृ शब्दोपतापयोः** । स्वरति । स्वर्त्ता स्वरिता । सिस्वरिषति सुस्वूर्षति । स्वृतः ।।६३६।।

६२९. **स्मृ चिन्तायाम्** । स्मरति । स्मर्य्यते । सस्मार । सस्मरतुः । स्मर्त्ता । अस्मार्षीत् । **यङि च** (७।४।३०) इति गुणः— सास्मर्य्यते । ण्यन्ताल्लुङ्—असस्मरत् ।।६३७।।

६३०. **द्वृ अनादरे**(९४)। द्वरति । दद्वार । दद्वरतुः । द्वारम् ।६३८

---

–"पाञ्चाल्याः पद्मपत्राक्ष्याः स्नायन्त्या जघनं घनम् । याः स्त्रियो दृष्टवत्यस्ताः पुंभावं मनसा ययु"रिति भारतीयपद्यस्य पूर्वार्द्धमप्युद्धतम् । माधवस्त्वाह "ष्टै वेष्टने । अयञ्च पाठो मैत्रेयस्य ।" इति ।

(९४) अत्र द्वृ इति माधवादिग्रन्थे नास्ति ।

६३१. **सृ गतौ**। सरति धावति। ससार। सस्रतुः। सस्रुः। असरत्। सारः। असुन् सरः। गौरादित्वात् सरसी। **प्रजने सर्त्तेः** (३।३।७१) इत्यप्—उपसरः ।।६३९।।

६३२. **ऋ गतिप्रापणयोः**। ऋच्छति। आर। आरतुः। अर्त्ता। अरिष्यति। आरत् (६५)। अर्पयति। "**अरित्रं केलिपातकः**।" ।।६४०।।

६३३. **गृ घृ सेचने**। गरति। जगार। घरति। जघार। घृतम्। घृणा। घर्मः। **अन्यत्रानभिधानमित्येके**। घारयतीति चौरादिकस्य ।।६४१, ६४२।।

६३४ **ध्वृ हूर्च्छने**। ध्वरति। ध्वर्य्यते। दध्वार, दध्वरतुः। ध्वृषीष्ट ध्वरिषीष्ट ध्वारिषीष्ट। यङि— दाध्वर्य्यते ।६४३।।

६३५. **षु स्रु गतौ**। सवति। सुषावयिषति॥। स्रवति। सुस्राव। असुस्रुवत्। सिस्रावयिषति सुस्रावयिषति। असिस्रवत् असुस्रवत्। प्रस्रावः ।।६४४,६४५।।

६३६. **षु प्रसवैश्वर्य्ययोः**। सवति। सुषाव। सोता। असौषीत्। सुतः। उत्सवः ।।६४६।।

६३७. **श्रु श्रवणे**। शृणोति। संशृणुते। शुश्रूषते। विश्रावः। प्रतिश्रवः। श्रुतिः ।।६४७।।

६३८. **ध्रु स्थैर्य्ये**। ध्रवति। दुध्राव। ध्रुवः ।।६४८।।

६३९. **दु द्रु गतौ**। दवति। द्रवति। अदुद्रुवत् ।।६४९,६५०।।

६४०. **जि ज्रि अभिभवे**। जयविशेषोऽभिभव इति विशेषार्थोऽयं पुनर्जयतिः पठ्यते। जयति। जिगाय। ज्रयति। जिज्राय ।।६५१, ६५२।।

**इति परस्मैभाषा अनुदात्ता उदात्तेतः**। एते धेडादयः परस्मैपदिनः, अनिटः।

६४१. **ष्मिङ् ईषद्धसने**। स्मयते। विसिष्मिये। स्मेता। विस्मा-

---

(६५) माधवादिमते तु आर्षीत्। च पुस्तके चैवम्।

॥ 'षु प्रसवैश्वर्ययोः' इत्यत्र 'षु' धातोः पाठात् इह 'शु स्रु गतौ। शवति। शुशाव। शुशावयिषति' इति पाठो युक्तः। यु० मी०

पयते विस्माययति । सिस्मयिषते । स्मेरम् । विस्मयः । स्मयः ।९५३।।

६४२. **गुङ् अव्यक्ते शब्दे** । गवते । जुगुवे । गुवाकः–पिनाकादयश्च (उण्, ४।४।५४) इत्याकः ।।९५४।।

६४३. **गाङ् गतौ** । गाते । त्रिष्वपि वचनेषु रूपमेतत् । गायते । जगे । जगाते । अगास्त ।।९५५।।

६४४. **घुङ् कुङ् उङ् ङुङ् शब्दे** । घवते । जुघुवे । कवते । चुकुवे । कोकूयते **न कवतेर्यङि** (७।४।६३) इति चुत्वनिषेधः । अवते । ऊवे । ऊषिषते । ङवते । ञुङुवे । ञोङूयते ।।९५६-९५९।।

६४५. **च्युङ् छ्युङ् ज्युङ् झ्युङ् प्रुङ् प्लुङ् गतौ** । च्यवते । चुच्युवे । चिच्यावयिषति । चुच्यावयिषति । च्युतः । छ्यवते । ज्यवते । जुज्युवे । झ्यवते । प्रवते । आप्राव्यो देवदत्तः । आप्राव्यं देवदत्तेन । प्लवते । पुप्लुवे ।।९६०-९६५।।

६४६. **क्लुङ् इत्येके** । क्लवते । विक्लवः ।।९६६।।

६४७. **रुङ् गतिरेषणयोः** । रवते । रुरुवे । रुतम् ।।९६७।।

६४८. **धृङ् अवध्वंसने** । धरते । दध्रे ।।९६८।।

६४९. **मेङ् प्रणिदाने** । अपमयते । अपमित्य याचते, अपमाय याचते । अपमीयते । मितिः । मितम् ।।९६९।।

६५०. **देङ् रक्षणे** । दयते । प्रणिदयते । दीयते । **दयतेर्दिगि लिटि** (७।४।९) इति दिग्यादेशेन द्विर्वचनबाधेष्यते । दिग्ये । दत्तम् ।९७०।

६५१. **श्यैङ् गतौ** । श्यायते । अवश्यायः । शीनं घृतम् । शीतो वायुः ।।९७१।।

६५२. **प्यैङ् वृद्धौ** । प्यायते । पप्ये । पप्यात । प्यानम् ।।९७२।।

६५३. **त्रैङ् पालने** । त्रायते । तत्रे । त्राणः त्रातः ।।९७३।।

**इति एते अनुदात्ताः स्मयतिप्रभृतयः** ।

६५४. **पूङ् पवने** । पवते । पुपुवे । पविता । **पूङश्च** (७।२।५१) इति वेट्– पवितः पूतः । पवित्वा पूत्वा । पिपविषते । पुनातीति पूञो रूपं क्रैयादिकस्य ।।९७४।।

६५५. **मूङ् बन्धने** । मवते । मविता । मूतः । मूत्वा ।।९७५।।

**६५६. डीङ् विहायसा गतौ** । डयते । डिड्ये । डयिता । डयिष्यते । चिण्वद्भावपक्षे—डायिष्यते । डिडयिषते । डयितः । डयितवान् । डयतेः परस्य निष्ठाप्रत्ययस्य सेटः कित्त्वप्रतिषेधो **धातुपारायणे** उपसंख्यातः ॥९७६॥

**इति आत्मनेभाषाः ।**

**६५७. तॄ प्लवनतरणयोः** । तरति । ततार । तेरतुः । तेरुः । तरिता तरीता । अतारीत् । तितरिषति तितरीषति तितीर्षति । तीर्णः । तीर्णवान् । तीर्त्वा । तरः । आतरः । आतरिकः ॥९७७॥

**इति परस्मैभाष उदात्तः । सेट्त्वादस्य प्राङ्निर्देशो न कृतः ।**

**६५८. गुप गोपनकुत्सनयोः** । जुगुप्सते । **निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यत** इति वचनान्निन्दायां सन् । जुगुप्साञ्चक्रे । निन्दाया अन्यत्राप्यर्थेऽस्मात् केवलादात्मनेपदं न भवति, अनभिधानात् । तदुक्तं "**नैतेभ्यः सनः प्रागात्मनेपदं परस्मैपदं वा पश्याम इति**" (९६) । तत् केवलादात्मनेपदार्थमस्यानुदात्तेत्त्वं न भवतीति सामर्थ्यात् सन्नन्तादात्मनेपदं भवति । उत्तरत्राप्येवं वेदितव्यम् । निन्दाया अन्यत्र (९७) गोपिता । गोपित्वा । गोपनम् । गुपितम् । गोपः ॥९७८॥

**६५९. तिज निशाने क्षमायाञ्च** । तितिक्षते । क्षमाया अन्यत्र तेजनम् । असुन् तेजः ॥९७९॥

**६६०. मान पूजायाम्** । मीमांसते । मानयति । मानः । मानित इति चौरादिकस्य धातोः **कर्मणः समानकर्तृकादिच्छायां वा** (३।१।७) इति वाग्रहणं **पूर्वयोगस्यापि** ( ३।१।६ ) शेष इत्यन्ये मानयतीति व्युत्पादयन्ति ॥९८०॥

**६६१. बध बन्धने** । बीभत्सते । बीभत्सं विकृतम् । पूर्ववद्वाग्रहणाद् बधको वध इति च भवति ॥९८१॥

---

(९६) भाष्यकारवाक्यमिदमत्रोद्धृतम् ।

(९७) मैत्रेयमते एतेभ्यः तिङामभावः । तेन कृत उदाहृताः । तथा च माधवः—"अत्र नन्दिमैत्रेयौ नह्येतेभ्य इत्यादिना भाष्येण तिङामभाव प्रतीयत इति निन्दादेरन्यत्र कृतमुदाजह्रतुः ।" इति । "एते नित्यं सन्नन्ताः । अर्थान्तरे त्वननुबन्धकाश्चुरादय" इति भट्टोजिः । तेन गोपयति । तेजयति । इत्यादि ।

**इति एते पूङ्प्रभृतय उदात्ताः ।**

६६२. **रभ राभस्ये ।** आरभते । आरेभे । रब्धा । रभ्यम् । आरम्भः । रब्धिः । रब्धुम् । रब्धः । रब्ध्वा ॥६८२।

६६३. **डुलभष् प्राप्तौ ।** लभते । लेभे । लब्धा । लम्भयति । लभ्यम् । उपलम्भः । लाभः । सुलभः । लब्ध्रिमम् । प्रलभा । उपलब्धिः ॥६८३॥

६६४. **ष्वन्ज परिष्वङ्गे ।** स्वजते । परिष्वजते । परिषस्वजे परिषस्वञ्जे । परिष्वङ्क्ता । पर्य्यस्वजत पर्य्यष्वजत । अभिषिष्वङ्क्षते । सिष्वञ्जयिषति ॥६८४॥

६६५. **हद पुरीषोत्सर्गे ।** हदते । जहदे । हत्ता । हत्तम् । हत्त्वा । हदनम् । हत् । हदं डिपति क्षिपतीति हड्डिपः । डिप क्षेप इति मूलविभुजादित्वात् कः ॥६८५॥

**इति आत्मनेभाषा अनुदात्ता अनुदात्तेतः ।**

६६६. **ञिक्ष्विदा अव्यक्ते शब्दे ।** क्ष्वेदति । चिक्ष्वेद । क्ष्वेदिता । क्ष्विण्णः । क्ष्विण्णमनेन क्ष्वेदितमनेन । क्ष्विद्यतीति ञिक्ष्विदा स्नेहनमोचनयोरित्यस्य दैवादिकस्य ॥६८६॥

६६७. **स्कन्दिर् गतिशोषणयोः ।** स्कन्दति । विस्कन्दति विष्कन्दति (९८)। चस्कन्द । स्कन्ता । अस्कन्दत् । अस्कान्त्सीत् अस्कदत् । चनीस्कद्यते । चिस्कन्त्सति । स्कन्त्वा प्रस्कन्दय । स्कन्नः स्कन्नवान् ॥६८७॥

६६८. **यभ विपरीते मैथुने ।** विपरीतार्थपूर्व्वक इत्यर्थः (९९) । यभति । ययाभ । येभतुः । यब्धा । अयाप्सीत् । यब्ध्वा । यभ्यम् । जभ इत्येके । जम्भति । जम्भिता । जभ्यम् । जम्भयति ॥६८८॥

५६९. **णम प्रह्वत्वे शब्दे च ।** नमति । प्रणमति । नमते स्वयमेव । नन्ता । अनंसीत् । अनंस्त दण्डः स्वयम् । नतः । नम्रः ॥६८९॥

६७०. **गम्लृ सृप्लृ गतौ ।** गच्छति । संगच्छते । जगाम । गन्ता ।

---

(९८) माधवादिमते तु कृत्येवायं विकल्पः । विस्कन्ता विस्कन्तेति, न तु तिङिः । वेः स्कन्देरनिष्ठायामिति (८।३।७३) पर्य्युदासात् ।

(९९) विपरीतानुष्ठान इत्यर्थं इति पाठान्तरम् ।

गमिष्यति । संगंस्यते । अगमत् । समगत समगंस्त । जिगमिषति । हृदयङ्गमः । आगामी । गामुकः । गमः । सर्पति । ससर्प । स्रप्ता सर्प्ता । असृपत् । सर्पः । उपसर्पः । सृप्त्वा । सृप्तः । सर्पिः ॥९९०, ९९१॥

६७१. **यमु उपरमे** । उदित्त्वमस्य **केचिन्ने**च्छन्ति । यच्छति । आयच्छते । ययाम । यन्ता । अयंसीत् । आयामयते । यमित्वा यत्वा । संयमः संयामः । यमः ॥९९२॥

६७२. **तप सन्तापे** । तपति । उत्तपते । निष्टपति । तप्ता । सन्तापः । सन्तापकः । तपः ॥९९३॥

६७३. **त्यज हानौ** । त्यजति । तत्याज । त्यक्ता । त्यक्ष्यति । अत्याक्षीत् । त्यक्त्वा । त्यागः । त्याज्यम् । त्यागी । त्यक्तः ॥९९४॥

६७४. **षन्ज सङ्गे** । सजति । अभिषजति । ससन्ज । ससन्जतुः । सङ्क्ता । सङ्क्ष्यति । अभ्यषजत् । सिसङ्क्षति । अभिषिषङ्क्षति । सिषन्जयिषति । अभिषङ्गः ॥९९५॥

६७५. **दृशिर् प्रेक्षणे** । पश्यति । सम्पश्यते । ददर्श । ददृशतुः । द्रष्टा । अदर्शत् अद्राक्षीत् । परलोकदृश्वा । सदृक् । सदृशौ । सदृशः । दृष्ट्वा । दृष्टम् । दृष्टिः ॥९९६॥

६७६. **दन्श दंशने** । दशति । दश्यते । ददंश । ददंशतुः । दंष्टा । अदाङ्क्षीत् । दन्दश्यते । दष्टम् । दष्ट्वा । दंष्ट्रा ॥९९७॥

६७७. **कृष विलेखने** । कर्षति । चकर्ष । चकृषतुः । कर्ष्टा क्रष्टा । अक्राक्षीत् अकार्क्षीत् अकृक्षत् । कृषते कृषतीति तु तुदादिपाठात् ॥९९८॥

६७८. **दह भस्मीकरणे** । दहति । ददाह । धक्ष्यति । अधाक्षीत् । दग्ध्वा । दग्धुम् । काष्ठधक् ॥९९९॥

६७९. **मिह सेचने** । मेहति । मिमेह । मेढा । अमिक्षत् । मेढ्रम् । मेहनम् । मेढुम् ॥१०००॥

६८०. **कित निवासे रोगापनयने च** । चिकित्सति । सङ्केतः । निकेतनम् ॥१००१॥

**इति परस्मैभाषा अनुदात्ता उदात्तेतः ।**

अथोभयपदिनः—

६८१. **दान अवखण्डने**। दीदांसति दीदांसते ॥१००२॥

६८२. **शान तेजने**। शीशांसति। शीशांसते। दानयति शानयतीति वाग्रहणात् ॥१००३॥

६८३. **डुपचष् पाके**। पचति पचते। पक्ता। पक्त्रिमम्। पचा। पचः। मितम्पचः। पक्त्रिः। पक्वम्। पाकः। उत्पचिष्णुः। पाकिमा लता ॥१००४॥

६८४. **षच समवाये**। सचति सचते। सिसचिषति। **पूर्ववत्सन** (१।३।६२) इत्यनेन कर्त्रभिप्राये सिसचिषते। सिषाचयिषति। षच सेचन इत्यनुदात्तेत् प्रागुक्तः क्रियाफलेऽकर्त्रभिप्रायेऽप्यात्मनेपदार्थः ॥१००५॥

६८५. **भज सेवायाम्**। भजति भजते। भक्ता। भक्तुम्। अर्थभाक्। भक्तम्। भगम् (१००) ॥१००६॥

६८६. **रञ्ज रागे**। रजति रजते। रज्यति अथवा रज्यते वस्त्रं स्वयमेव। रङ्क्ता। रागी। रागः रङ्गः। रक्तः। रञ्जः। रञ्जकः। रक्त्वा रङ्क्त्वा। रजकः। रजकी। रजनम्। रजनी ॥१००७॥

६८७. **शप आक्रोशे**। शपति शपते। तस्मै शपते। शप्ता। शापः। शपनः। शबलः। शबली। शबलगुः। रञ्जिशपी दिवादावपि पठ्येते उभयपदिनौ ॥१००८॥

६८८. **त्विष दीप्तौ**। त्वेषति त्वेषते। त्वेष्टा। त्विट्। अवपूर्वो दाननिरसनयोः। अवत्वेषति अवत्वेषते ॥१००९॥

६८९. **यज देवपूजासङ्गतिकरणदानेषु**। यजति यजते। इज्यते। इयाज ईजे। ईजतुः ईजाते। यष्टा। अयाक्षीत् अयष्ट। यागः। इष्टिः। इज्या। अग्निष्टोमयाजी। यज्ञः। ऋत्विक्। इष्टम्। इष्ट्वा ॥१०१०॥

६९०. **डुवप बीजसन्ताने**। वपति वपते। उप्यते। उवाप ऊपे। ऊपतुः ऊपाते। वप्ता। उप्तम्। उप्त्रिमम् ॥१०११॥

---

(१००) खनो घ च (३।३।१२५) इति च शब्दात् घः, कुत्वम्, भगम् इति माधवः। चकारस्यानुक्तसमुच्चयार्थत्वं द्रष्टव्यमित्यर्थः।

**६६१. वह प्रापणे** । वहति वहते । पुरुषवाहं वहति । भारं वहति । प्रवहति । उह्यते । उवाह ऊहे । ऊहतुः ऊहाते । उवहिथ उवोढ । वोढा । अवाक्षीत् अवोढ । वहः । प्रवाहः ।

वह प्रापण इति सकर्मकोऽयम् । अर्थान्तरे वृत्ते स्यन्दनेऽर्थे वर्त्तमानोऽकर्मकः नदी वहतीति । इह तु जीवति प्राणान् धारयतीति पटमिच्छति पटीयतीति धात्वर्थेन कर्मण उपसंग्रहेऽकर्मकत्वम् । इहास्ते शेत इति प्रसिद्धितः । इह सङ्गच्छते संपश्यते आहत इति कर्माविवक्षायाम् । तदुक्तम्—

**"धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् ।**
**प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया"** ।।१।। इति ।।१०१२।।

**इति उभयतोभाषाः स्वरितेतोऽनुदात्ताः । दाञ्शान्सचयस्तूदात्ताः ।**

६६२. **वस निवासे** । वसति । उष्यते । उवास । ऊषतुः । वस्ता । वत्स्यति । अवात्सीत् । अवात्ताम् । उषितः । उषितवान् । ऊषिवान् । उषित्वा । वसतेर्वासिर्वर्धकिभाण्डम् । अनिट्प्रकरणानुरोधेन यजादिकार्य्यानुरोधेन च एते वहिप्रभृतयो हलन्ता अपि यथायथं वर्गेषु पूर्वं नोपदिष्टाः । अयमुदात्तेदनुदात्तः परस्मैभाषः ।।१०१३।।

**६६३. वेञ् तन्तुसन्ताने** । वयति वयते । ववौ ववे, उवाय ऊये ऊवे । ववतुः ववाते, ऊयतुः ऊयाते, ऊवतुः ऊवाते । ववुः वविरे, ऊयुः ऊयिरे, ऊवुः ऊविरे । ऊयते । वाययति । उतः । निरुतम् । ऊतिः । व्यूतिः । प्रोतकम् । प्रोतिका । उत्वा प्रवाय ।।१०१४।।

**६६४. व्येञ् संवरणे** । व्ययति व्ययते । विव्याय विव्ये । विव्यतुः विव्याते । विव्युः विव्यिरे । विव्ययिथ विव्यिषे । व्याता । वेवीयते । प्रव्याय वीत्वा । परिवीय परिव्याय ।।१०१५।।

**६६५. ह्वेञ् स्पर्द्धायां शब्दे च** । ह्वयति ह्वयते । निह्वयते । हूयते । जुहाव जुहुवे । जुहुवतुः जुहुवाते । ह्वाता । अह्वास्त अह्वत् अह्वत । जोहूयते । जुहूषति जुहूषते । जुहावयिषति । अजूहवत् । प्रह्वः । हूतः । निहवः । हवः । आहवः । हूतिः । मित्रह्वायः ।।१०१६।।

**एते विभाषिता इत्युभयपदिनः । अनुदात्ता अनिटश्च ।**

**६६६. वद व्यक्तायां वाचि** । वदति । उद्यते । उवाद, ऊदतुः ।

वदिता । उदित्वा । उदितुम् । अवद्यम् । अनुद्यम् । अनुवाद्यम् । अपवाद्यम् । ब्रह्मवादी । वदनम् । वावदूको वाचालः । वदान्यः ।।१०१७।

७६७. **टुओश्वि गतिवृद्ध्योः** । श्वयति । शिश्वाय । शुशाव । शिश्वियतुः शुशुवतुः । श्वयिता । शूयात् । अश्वत् अशिश्वियत् अश्वयीत् । शेश्वीयते शोशूयते । शुशावयिषति शिश्वाययिषति । अशूशवत् अशिशिवयत् । श्वयथुः । शूनः शूनवान् ।।१०१८।।

**इति परस्मैभाषौ** इति परस्मैपदिनावेतौ उदात्तौ च ।

**वृद्** इति यजादिपरिसमाप्तेः । न्याय्यविकरणास्तु भ्वादयोऽपरिसमाप्ता एव, अवृत्करणात् । तेनात्रान्येपि धातवो इचुलुम्पप्रभृतयो द्रष्टव्याः । तेनेदमपि सिध्यति–"**कलां नार्हन्ति षोडशी**"मिति (१०१)।

**इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ धातुप्रदीपे**
**भ्वादीनां वृत्तिः ।।१।।**

---

(१०१) ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ।।१।।

इति मानवधर्मशास्त्रे । तत्रायं धातुरर्ह पूजायामित्यस्मादभिन्न एव । एवञ्च मैत्रेयमतम् । अर्हन्ति प्राप्नुवन्ति । जपयज्ञस्य षोडशांशेनापि न समा भवन्तीति कुल्लूकः । अर्हतिः प्राप्त्यङ्गार्हमूल्यपणने वर्त्तते । अर्हशब्दात् क्विपं कृत्वार्हतीति रूपमिति तु मेधातिथिः ।

# अथ अदादय उच्यन्ते

**१. अद भक्षणे** । अत्ति । अत्तः । अदन्ति । आद जघास -- **लिटच-न्यतरस्याम्** (२।४।४०), आदतुः जक्षतुः । **इडत्त्यर्त्तिव्ययतीनाम्** (७।२।६६)—आदिथ जघसिथ । अत्ता । अत्तु अत्तात् । अद्धि । आदत् । आत्ताम् । आदन् । अघसत् । व्यत्यघत्त । व्यत्यघत्साताम् । अद्मरः । सस्यात् । क्रव्यात् । क्रव्यादः (१) । अदती । अन्नम् । जग्धम् । जग्धवान् । प्रजग्ध्य । घासः । प्रघसः ॥१॥

**२. हन हिंसागत्योः** । हन्ति (२) । आहते । हतः । घ्नन्ति । जघान । जघ्नतुः । हन्ता । हतात् हन्तु । जहि । अहन् । हन्यात् । वध्यात् । अवधीत् । घातयति । जेघ्नीयते जङ्घन्यते । जिघांसति । ब्रह्महत्या । अश्वहत्या । वृत्रहा, वृत्रहणौ—**एकाजुत्तरपदे णः** (८।४।१२) । जङ्घा । अहल्या ॥२॥

**इति परस्मैभाषावनुदात्तौ ।**

**३. द्विष अप्रीतौ** । द्वेष्टि द्विष्टे । द्विषन् द्विषाणः । विद्विट् । द्विष्टम् ॥३॥

**४. दुह प्रपूरणे** । दोग्धि पयो गामस्मै गोपः । दुग्धे । दुह्यते गौः क्षीरम् । प्रधाने कर्मणि लकारः । "**स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता ।**"

---

(१) सस्यादित्यदोऽनन्ने (३।२।६८) इति विट् । अन्नोपपदे तु अन्नादः कर्मण्यण् (३।२।१)। क्रव्यादिति क्रव्ये चेति (३।२।६८) विट् । अदोऽनन्ने (३।२।६८) इत्येव सिद्धे पुनर्विधानं वासरूपविधिबाधनार्थम् । क्रव्याद इति कृत-विकृत्तपक्वमांसशब्दोपपदेऽण् । पृषोदरादित्वादुपपदस्य क्रव्यभावः । क्रव्यादोऽस्रप आशर इत्यमरः । कथं तर्हि व्याप्तं गुहाशयैः क्रूरैः क्रव्यादैः सनिशाचरैरिति भट्टिः ? चिन्त्यम् । नह्याममांसभक्षे व्याघ्रादौ क्रव्याद इति स्यात् ।

(२) भूदेवेभ्यो महीं दत्त्वा यज्ञैरिष्ट्वा सुदक्षिणैः ।
अनुक्त्वा निष्ठुरं वाक्यं स्वर्गं हन्तासि सुव्रत ॥१॥ इत्यत्र हन्तिर्गत्यर्थः ।

दुदोह दुदुहे । दोग्धा । अधुक्षत् अधुक्षत अदुग्ध । अधुक्षः अदुग्धाः अधुक्षथाः । अधुग्ध्वम् अधुक्षध्वम् अधुक्षथ । अदुह्वहि अधुक्षावहि अधुक्षाव । स्वयमदुग्ध स्वयमदोहि स्वयमधुक्षत (३) । गोधुक् । कामदुघा गौः ॥४॥

५. **दिह उपतापे** । देग्धि दिग्धे । धेक्षि धिक्षे । देग्धा । दिह्यात् दिहीत । अदिग्ध अधिक्षत अधिक्षत् । अदिग्धाः अधिक्षथाः अधिक्षः । अधिग्ध्वम् अधिक्षध्वम् अधिक्षथ । अदिह्वहि अदिक्षावहि अधिक्षाव । देहः । देही । दिग्धम् ॥५॥

६. **लिह आस्वादने** । लेढि लीढे । लिलेह लिलिहे । लेढा । अलेट् अलीढ । अलिक्षत् अलिक्षत अलीढ । अलीढाः अलिक्षथाः अलिक्षः । अलीढ्वम् अलिक्षध्वम् अलिक्षथ । अलिह्वहि अलिक्षावहि अलिक्षाव । लीढः । श्वलिट् ॥६॥

**इति उभयतोभाषाः स्वरितेतोऽनुदात्ताः** । एतेऽदिप्रभृतयोऽनुदात्ताः ।

७. **चक्षिङ् व्यक्तायां वाचि** । इकारोऽनुदात्तेतश्च **हलादेः** (३।२।१४९)इति विशेषणार्थो युजर्थश्च । यद्येवं तत एवात्मनेपदं सेत्स्यति । किं ङित्करणेन ? अन्तेदित्त्वान्नुम् स्यात् । नुम् मा भूदित्यर्थः । एवं तर्ह्यकारोऽस्तु । तत एवात्मनेपदं युजपि भविष्यति । वैचित्र्यार्थमनुबन्धद्वयस्योपादानमित्य**एके** । आत्मनेपदानित्यत्वज्ञापनार्थमित्य**न्ये** । आचष्टे । आचक्षाते । आचक्षते । वा **लिटि** (२।४।५५) इति (४) ख्याञाऽशविकल्पः । आचख्यौ आचख्ये आचचक्षे । **अस्यतिवक्तिख्यातिभ्योऽङ्** (३।१।५२) अख्यत् अख्यत । प्रियाख्यः । **मूलविभुजादिकः** (३।२।५, वा) । गोसंख्यः । पशुसंख्यः । विचक्षणः । नृचक्षाः— असुन् । सञ्चक्ष्या दुर्जनाः । वर्जनीया इत्यर्थः ॥७॥

८. **ईर गतौ कम्पने च** । ईर्त्ते । ईराते । ईरते । ईराञ्चक्रे । ईर्त्तेः **केचिदामभावमिच्छन्ति** । ईरे(५)। ईरयति । समीरितम् । समीरणः ।

---

(३) दहश्चेति कर्मकर्त्तरि (३।१।६३) वा चिण् । पक्षे क्सः लुक् च ।

(४) खचाञादेशश्चायं क्शादिश्च । अतो लिटि आचक्शौ । आचक्शे । लुङि अक्शासीत् अक्शास्त इत्यपि रूपम् । (५) रथचरणादिभिरीरिरेऽनुवीरा इति च प्रयोगः । अयञ्चापशब्द एव । भाष्यवार्त्तिकविरोधात् ।

निम्नमीर्त्तं इति नीरम् । **इगुपध** (३।१।१३५) कः । स्वैरम् स्वैरी ॥८॥

९. **ईड स्तुतौ** । ईट्टे । ईडाते । ईडते । ईडाञ्चक्रे । ईडिषे । ईडिध्वे । ईडिष्व । ईडिध्वम् । ईड्यः । ईडा ॥९॥

१०. **ईश ऐश्वर्य्ये** । ईष्टे । ईशाते । ईशते । ईशाञ्चक्रे । ईशिषे । ईशिध्वे । ईशानः । ईश्वरः । ईश्वरा । "**विन्यस्तमङ्गलमहौषधिरीश्वरायाः** ।" ईश्वरीति औणादिको वरट् (६) ॥१०॥

११. **आस उपवेशने** । आस्ते । आसाते । आसते । आसाञ्चक्रे । आसीनः । आस्या (७) । आसना ॥११॥

१२. **आङ् शासु इच्छायाम्** । उकारोऽस्य **नाग्लोपिशास्वृदिताम्** (७।४।२) इत्यत्र सामान्यग्रहणाविघातार्थः । **उदितो** वा (७।२।५६) इति विशेषणार्थश्च । क्त्वाप्रत्ययस्य च प्रयोगश्छन्दस्येव सम्भवति । तत्र ल्यपोऽभावः फलम् । **क्त्वापि छन्दसि** (७।१।३८)इति अनादेशः । प्रयोजनान्तरमिड्विकल्पश्च । आशासित्वा आशास्त्वेति । आशास्ते । आशासाते । आशासते । आशास्से । आशशासे । आशासिष्ट । आशशासत् । आशास्तः । आशास्तवान् । आशासयति । आशासा (८) । आङ्सहितस्य शासेरिह ग्रहणाच् शासु अनुशिष्टौ इत्यस्य ग्रहणं नेष्यत इति **शास इदङ्हलोः** (६।४।३४) इतीत्त्वं न भवति । आशीरिति तु ज्ञापकात् सिद्धम् (९) ॥१२॥

१३. **वस आच्छादने** । वस्ते । वसाते । वसते । ववसे । वसिता । वसितम् । वसित्वा । वसनम् । वासः । चर्मवः ॥१३॥

१४. **कसि गतिनिशानयोः** । कंस्ते । कंसाते । कंसते । चकंसे । कंसः सुरारिभेदः । कांस्यम् ॥१४॥

१५. **णिसि चुम्बने च** । निंस्ते । निंस्से । निंसे । प्रणिंस्ते प्रनिंस्ते । निनिंसे । निंसिता ॥१५॥

---

(६) प्रसीद विश्वेश्वरि पाहि विश्वमिति देवीमाहात्म्ये ।

(७) वासरूपविधिना ण्यत् ।

(८) गुरोश्च हलः (३।३।१०३) इत्यङ् ।

(९) क्षियाशीःप्रैषेषु तिङाकाङ्क्षमिति (८।२।१०४) निर्देशात् ।

**१६. णिजि शुद्धौ ।** निङ्क्ते । प्रणिङ्क्ते । निनिञ्जे ।।१६।।

**१७. शिजि अव्यक्ते शब्दे ।** शिङ्क्ते । शिञ्जाते । शिञ्जते । शिशिञ्जे । शिञ्जा । शिञ्जानः । शिञ्जितम् ।।१७।।

**१८. पिजि वर्णे ।** पिङ्क्ते । पिञ्जाते । पिपिञ्जे । पिञ्जरः । पिङ्गलः । पिङ्गली ।।१८।।

**१९. पृजि इत्येके ।** पृङ्क्ते ।।१९।।

**२०. वृजी वर्जने ।** वृक्ते । वृजाते । वृजते । ववृजे । वर्जिता । वृक्तम् (१०) ।।२०।।

**२१. पृजी सम्पर्के ।** पृक्ते । पपृचे । पृक्तः । सम्पर्कः । पृणक्तीति रुधादिपाठात् ।।२१।।

**२२. षूङ् प्राणिगर्भविमोचने ।** सूते । सुवाते । सुवते । सुषुवे । सुषुवाते । सविता सोता । सूताम् । सुवाताम् । सूष्व । सूध्वम् । सुवै । सुसूषते । सूतः । सूतवान् । सूत्वा । सूतिः । अङ्गदसूः । सूतका सूतिका ।।२२।।

**२३. शीङ् स्वप्ने ।** शेते । शयाते । शेरते । शय्यते । शिश्ये । शिश्याते । शिश्यिरे । शाशय्यते । शयनम् । शयालुः । शय्या ।।२३।।

**इति आत्मनेभाषा** इति आत्मनेपदिन इत्यर्थः ।

**२४. यु मिश्रणे ।** यौति । युयाव । यविता । अयावीत् । यियविषति युयूषति । यूतिः । योत्रम् । युतः ।।२४।।

**२५. रु शब्दे ।** रौति । रुराव । रविता । संरावः । रवः रावः । रुतम ।।२५।।

**२६. णु स्तुतौ ।** नौति प्रणौति । प्रणुनाव । नविता । नुतः ।।२६।।

**२७. टुक्षु शब्दे ।** क्षौति । चुक्षाव । क्षविता । क्षवः । क्षवथुः । क्षुतम् । उत्तरसंयोगवत्प्रकरणानुरोधेन रु शब्द इत्यनेन सह न निर्दिश्यतेऽयम् ।।२७।।

---

(१०) अयमिदिदिति मैत्रेय इति केवलं माधवीयधातुवृत्तौ हि दृश्यते । नत्वस्माभिः संगृहीतेष्वेकस्मिन्नपि पुस्तके । इदित्त्वे वृङ्क्ते । ववृञ्जे । वृञ्जिता । अवृङ्क्त । विवृञ्जिषते । वरीवृञ्जाते । वृञ्जयति । अववृञ्जत् इति रूपाणि ।

२८. **क्ष्णु तेजने** । क्ष्णौति । संक्ष्णुते शस्त्रम् । चुक्ष्णाव । क्ष्णविता ॥२८॥

२९. **ष्णु प्रस्रवणे** । स्नौति । स्नूयते । प्रस्नुते गौः स्वयमेव । प्रास्नोष्ट [गौः]स्वयमेव । सुष्णाव । स्नविता । सुस्नूषति । स्नुषा ॥२९

**इति एते परस्मैभाषाः** । यौतिप्रभृतयः परस्मैपदिन इत्यर्थः ।

३०. **ऊर्णुञ् आच्छादने** । ऊर्णोति ऊर्णौति ऊर्णुते । प्रोर्णुनाव प्रोर्णुनुवे । प्रौर्णोत् प्रौर्णुत । प्रौर्णावीत् प्रौर्णवीत् प्रौर्णुवीत् प्रौर्णुविष्ट । ऊर्णुनूषति ऊर्णुनविषति ऊर्णुनुविषति । ऊर्णोनूयते । ऊर्णावयति । और्णुनवत् (११) । ऊर्णुत्वा प्रोर्णुत्य । प्रोर्णुतः । ऊर्णा । ऊर्णायुः ॥३०॥

**इति उभयतोभाष** इत्युभयपदी अयम् । **उदात्ताश्च चक्षिङ्प्रभृतयः ।**

३१. **द्यु अभिगमने** । द्यौति । द्युतः । द्युवन्ति । दुद्याव । द्योता । द्यौतु ॥३१॥

३२. **षु प्रसवैश्वर्य्ययोः** । सौति । सुषाव । सोता । सवतीति भ्वादिपाठात् ॥३२॥

३३. **कु शब्दे** । कौति । चुकाव । कोता । चोकूयते । कुवतेरपि चोकूयत इति । कवतिरव्यक्ते शब्दे । कुवतिरार्तस्वरे । कौतिः शब्दमात्र एवेत्याभिधानव्यवस्था (१२) । कोकूयत इति भौवादिकस्य कवतेरेवाभ्यासस्य चुत्वप्रतिषेध इष्यते । अनिडयमिति रौतिना सह नोपदिश्यते ॥३३॥

**इति परस्मैभाषा** इति द्युप्रभृतयः परस्मेपदिनः ।

३४. **ष्टुञ् स्तुतौ** । स्तौति स्तुते । तुष्टाव तुष्टुवे । स्तोता । अस्तावीत् अस्तोष्ट । तुष्टूषति तुष्टूषते । स्तुत्यम् । स्तुतः । स्तवः । प्रस्तावः । संस्तावश्छन्दोगानाम् । **तु इति सौत्रो धातुर् वृद्धचर्थः** । हिंसार्थ **इत्येके** । तौति तवीति । छान्दसो ऽयमित्या**पिशलिः** ॥३४॥

---

(११) भट्टोजिमते तु और्णूनवदिति अभ्यासदीर्घत्वम ।

(११) अव्यक्ते कवतिः शब्दे कौतिः स्याच्छब्दमात्रके ।
आर्तस्वरे तु कुवतिरित्याहुः शब्दकोविदाः ॥१॥ इति ।

**३५. ब्रूञ् व्यक्तायां वाचि ।** ब्रवीति ब्रूते आह । ब्रूतः ब्रुवाते आहतुः । ब्रुवन्ति ब्रुवते आहुः । ब्रवीषि ब्रूषे आत्थ । ब्रुथः ब्रुवाथे आहथुः । उच्यते । उवाच ऊचे । ऊचतुः ऊचाते । ऊचुः ऊचिरे । अवोचत् अवोचत । अवाचि । ब्रूते कथा स्वयमेव । **"स्वयमवोचत कथा स्वतः** (१३) ।" उक्तः । उक्त्वा । उक्तिः ॥३५॥

**इति एतौ उभयतोभाषौ** इति उभयपदिनौ इत्यर्थः ।

**३६. इण् गतौ ।** एति । इतः । यन्ति । इयाय । ईयतुः । ईयुः । अगात् । गमयति । आययति । जिगमिषति । इषिषति । इत्यः ॥ **इति अयं परस्मैभाषः** । परस्मैपदी इकारान्तोऽयम् । इकः पूर्वेण वा परेण वा निर्देष्टव्ये पृथगस्य परस्मैपदिनो निर्देश इङिकोर्भेदार्थः । तौ ह्यधिपूर्वकावेव प्रयुज्येते । अयन्तु केवलोऽन्योपसर्गपूर्वोऽपि ॥३६॥

**३७. इङ् अध्ययने** । अधीते । अधीयाते । अधीयते । अधिजगे । अधिजगाते । अध्यगीष्ट अध्यैष्ट । अध्यैष्यत अध्यगीष्यत । अध्यापयति । अध्यापिपत् अध्यजीगपत् । अधिजिगापयिषति अध्यापिपयिषति । अधिजिगांसते । अधीयानः । अधीयन् पारायणम् । अधीतः । अधीत इति अध्यायकः । अध्यापयतीति अध्यापकः । ण्यन्ताण्ण्वुल् । कठश्चासावध्यापकश्चेति कठाध्यापकः । ब्राह्मणाध्यापक इति **याजकादिभिश्च** (२।२।९) इति कारकषष्ठीसमासः ॥३७॥

**अयमात्मनेभाषः** । आत्मनेपदीत्यर्थः ।

**३८. इक् स्मरणे** । ककारोऽ**धीगर्थदयेशां कर्मणि** (२।३।५२) इति विशेषणार्थः । अध्येति । अधीतः । अधीयन्ति । **केचित् तु इणो यण्** (६।४।८१) इति यणादेशमिच्छन्ति—अधियन्ति (१४) । अधीयाय । अध्यगात् ॥३८॥

---

(१३) शुद्धे कर्मणि यक्चिणौ—उच्यते, अवाचि इति । कर्मकर्तर्य्येव तयोर्लोपः । [न यक्चिणोर्लोपो ऽपि तु 'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञ्' इत्यादिना (३।१।८९ वा०) प्रतिबोधः । यु० मी० ]

(१४) इणो यण् (६।४।८१) इत्यत्र णकारोच्चारणमिङिकोर्निवृत्त्यर्थमिति न्यासकारः । ये तु इण्वदिक इति (२।४।४५, वा) सार्वधातुकार्धधातुकयोः सामान्येनातिदेशमिच्छन्ति तेषां मते इङ एव निवृत्त्यर्थम् । इकस्तु भवितव्यमेव यणा । अधियन्ति । अधियन् । मतान्तरे त्वार्धधातुक एव यण्—अधीयाय । न

**३९. वी गतिप्रजनकान्त्यसनखादनेषु** । वेति । वीतः । वियन्ति । विवाय । विव्यतुः । विव्युः । वेता ।।३९।।

४०. **या प्रापणे** । याति । प्रणियाति ययौ । याती यान्ती । यायावरः ।।४०।।

४१. **वा गतिगन्धनयोः** । वाति । ववौ । वाजयति वापयति । निर्वाणः निर्वातः ।।४१।।

४२. **भा दीप्तौ** । भाति । बभौ ।।४२।।

४३ **ष्णा शौचे** । स्नाति । सस्नौ । सिष्णासति । सिष्णापयिषति । निष्णातः । प्रतिष्णातं सूत्रम् । नदीष्णः ।।४३।।

४४. **श्रा पाके** । श्राति । शश्रौ । शृतं क्षीरम् । श्राणा यवागूः ।।४४।।

४५. **द्रा कुत्सायां गतौ** । द्राति । प्रणिद्राति । दद्रौ । निद्रा । निद्राणः । निद्रालुः ।।४५।।

४६. **प्सा भक्षणे** । प्साति । प्रणिप्साति । पप्सौ । अप्सासीत् । अप्सासिष्टाम् । प्सातः । द्रप्सः (१५) ।।४६।।

४७. **पा रक्षणे** । पाति । पायते राज्ञा लोकः । पपौ । अपासीत् । पालयति । पायः । पायकः ।।४७।।

४८. **रा दाने** । राति । व्यतिराते । व्यतिरासे । व्यतिरै । ररौ ।।४८।।

४९. **ला आदाने** । लाति । व्यतिलाते । ललौ । लाता । अलासीत् ।।४९।।

**५०. दाप् लवने** । दाति । प्रणिदाति प्रनिदाति । दायते वृक्षस्तक्षणा । ददौ । अदासीत् । दापयति । दातं बर्हिः । दात्रम् ।।५०।।

५१. **ख्या प्रकथने** । ख्याति । चख्यौ । अख्यत् । **चक्षिङः ख्याञ्** (२।४।५४)इति ख्याञादेशे आचख्ये आचख्यौ । इत्थञ्चाकर्त्रभिप्राये

---

तु सार्वधातुके अधीयन्ति । 'ससीतयो राघवयोरधीयन्निति भट्टिः । अधिगमयति । अधिजिगमिषति ।

(१५) द्रवणेन प्सानीयो द्रप्सः । घञर्थे कः । पृषोदरादित्वाद् द्रादेशः ।

क्रियाफले आत्मनेपदं मा भूदिति। कर्त्रभिप्राये तङ् यथा स्यात् ॥५१॥

५२. **प्रा पूरणे**। प्राति। पप्रौ। प्रायः ॥५२॥

५३. **मा माने**। माति। मीयते। ममौ। मितम् ॥५३॥

५४. **वच भाषणे**। वक्ति। वक्तः। वक्षि। वच्मि। अन्तवचनस्यानभिधानमाचक्षते। उवाच। ऊचतुः। ऊचुः। उवक्थ उवचिथ। वक्ता। अवोचत् अवोचताम् अवोचन्। **ब्रुवो वचिः** (२।४।५३) इत्यादेशे उमि अवोचत्, अवोचत। प्रवचनीयो देवदत्तः, प्रवचनीयं देवदत्तेन। वाक्। वाचौ ॥५४॥

**इति अनुदात्ता** इति द्यौतिप्रभृतयः।

५५. **विद ज्ञाने**। वेत्ति वेद। विवेद विदाञ्चकार। संविद्रते संविदते। वेदिता। वेत्तु विदाङ्करोतु (१६)। विदितम्। ब्राह्मणवेदं भोजयति ॥५५॥

५६. **अस भुवि**। अस्ति। स्तः। सन्ति। असि। स्थः। स्थ। [अस्मि स्वः] स्मः। व्यतिसे। व्यतिहे। व्यतिस्वहे। व्यतिस्महे। इह नित्यत्वा**देत ऐ** (३।४।९३) इति ऐकारादेशे **ह एति** (७।४।५२) इति न भवति। व्यत्यसै। व्यत्यसावहै। व्यत्यसामहै। अस्तु एधि। असानि। असाव। असाम। आसीत्। आस्ताम्। आसन्। बभूव। अभूत्। सन्। कारयामासविदामासेत्यनुप्रयोगे भूभावो नेष्यते (१७)। **केचिद**नुप्रयोगादन्यत्रापि नेच्छन्ति (१८) ॥५६॥

५७. **मृजू शुद्धौ**। मार्ष्टि। मृष्टः। मृजन्ति मार्जन्ति। ममार्ज। ममार्जतुः ममृजतुः। ममार्जुः ममृजुः। मार्जिता मार्ष्टा। मार्ष्टु।

---

(१६) वक्त्रं संवृणु नाञ्चलेन चपले पङ्केरुहस्यास्य वा तत्त्वं वीक्ष्य विदांकरोतु भगवानम्भोजिनीवल्लभ इति।

(१७) अनुप्रयोगे तु भुव्यस्त्यबाधनं स्मरन्ति कर्त्तुर्वचनान्मनीषिण इति हि अत उत् (६।४।११३) सूत्रे वार्त्तिकम्।

(१८) प्रादुरास बहुलक्ष्माच्छविरित्यादौ यथा। पूर्वन्त्वयमसते रासेत्याह (द्र० पूर्वत्र पृष्ठ ६३, धातुसूत्र ५८८)।

मृष्टाम् । मृड्ढि । अमार्ट् । अमृष्टाम् । अमार्जीत् अमार्क्षीत् । मिमार्जिषति मिमृक्षति । मृज्यः मार्ग्यः। मृजा । तुन्दपरिमृजः तुन्दपरिमार्जः। अपामार्गः । अहिमार्गः ॥५७॥

५८. **रुदिर् अश्रुविमोचने** । रोदिति । रुदितः । रुदन्ति । रुरोद । रुरुदतुः । रुरुदुः । रोदिता । अरोदीत् अरोदत् । अरुदत् अरोदीत् । रुदित्वा । रुरुदिषति । रुद्रः । रुद्राणी ॥५८॥

**इति उदात्ता** इति विदिप्रभृतयः ।

५९. **ञिष्वप् शये** । स्वपिति । सुष्वाप सुषुपतुः । स्वप्ता । सुस्वप्ता । सुप्तमस्य । सुषुप्सति । सोषुप्यते । असूषुपत् । सुष्वापयिषति । स्वप्नः । स्वप्नक् । अनुदात्तोऽप्ययं रुदादिकार्य्यानुरोधेन चात्र पठ्यते ॥५९॥

६०. **श्वस प्राणने** । श्वसिति । शश्वास । श्वसिता । अश्वसीत् । विश्वासः । श्वस्तः श्वसितः । श्वसनः । क्षमूष् सहन इति घटादिपाठेनैव सिद्धे षित्त्वं ज्ञापकमनित्यं गणकार्य्यमिति । तेन **न विश्वसेत् पूर्वविरोधितस्येति** शपो लुङ् न भवतीति व्याचक्षते । भट्टिकाव्ये च प्रयोगो दृश्यते—"**आश्वसेयुर्निशाचराः**" इति ॥६०॥

६१. **अन च** । प्राणन इत्यपेक्षते । प्राणिति । प्राण । प्राणिणत् । प्राणिणिषति । अपानः । प्राणितः ॥६१॥

६२. **जक्ष भक्षहसनयोः** । जक्षिति । जक्षितः । जक्षति । जक्षत्, जक्षतौ । जक्षः ॥६२॥

**वृत्** इति रुदादिः समाप्त इत्यर्थः ॥

६३. **जागृ निद्राक्षये** । जागर्ति । जागृतः । जाग्रति । जागर्य्यते । जागृयात् । जागर्य्यात् । जजागार जागराञ्चकार । जजागरतुः जागराञ्चक्रतुः । जागरिता । अजागरीत् । अजागः । जागरयति । जाग्रत्, जाग्रतौ । जागरितः । जागरः । जागरूकः । जागर्य्या जागरा ॥६३॥

६४. **दरिद्रा दुर्गतौ** । दरिद्राति । दरिद्रितः । दरिद्रति । "**कलौ सर्वे दरिद्रति** ।" दरिद्रिता । दिदरिद्रासति दिदरिद्रिषति । दरिद्रत् । दरिद्रतौ । दरिद्राणम् । दरिद्रायकः । दरिद्रः । दारिद्री ॥६४॥

६५. **चकासृ दीप्तौ ।** चकास्ति । चकास्तः । चकासति । चकासाञ्चकार । अचकासीत् । अचीचकासत् अचचकासत् । चकासत्, चकासतौ, चकासति कुलानि, चकासन्ति कुलानि ॥६५॥

६६. **शासु अनुशिष्टौ ।** शास्ति । शिष्टः । शासति । शासिता । शास्तु । शाधि । शासानि । अशिषत् । अशशासत् । शासित्वा शिष्ट्वा । शासनम् । शिष्टिः । शिष्टः । शास्तिरित्यौणादिकम्, **वसेस्तिः** (उण्, ४।१८१) इति उणादौ योगविभागात् तिप्रत्ययः ॥६६॥

**इति परस्मैभाषा** इति इक् स्मरण इत्यादयः ।

६७. **दीधीङ् दीप्तिदेवनयोः** । दीधीते । दीधीः । दीधितिः । दीधिता । दीधितम् ॥६७॥

६८. **वेवीङ् वेतिना तुल्ये ।** वेवीते । वेविता । एतौ छान्दसाविति **भाष्यकृ**दिच्छति ॥६८॥

**इति आत्मनेभाषा**वित्यात्मनेपदिनौ ।

**वृत्** । इति जक्षित्यादि-परिसमाप्तेः ।

६९. **षस षस्ति स्वप्ने** । सस्ति । ससास । सेसतुः । सेसुः । सस्यम् । सस्यको मणिः । संस्ति । संस्तः । **स्कोः** (८।२।२९) इति संयोगादिलोपोऽत्र नेष्यते, बहूनां समवाये द्वयोः संयोगसंज्ञा न । संस्तन्ति । संस्तिता ॥६९,७०॥

७०. **वश कान्तौ ।** वष्टि । उष्टः । उशन्ति । वक्षि । उश्यते । वावश्यते । उशितः । वशः । वश्यः । उशीरम् ॥७१॥

**इति उदात्ता** इति षसप्रभृतयः ।

(1) **चर्करीतञ्च** (१९) । यङ्लुगन्तस्येयं **पूर्वाचार्य्यसंज्ञा** । यङ्लुगन्ताश्चादादिकाः परस्मैपदिनो विज्ञेया इत्यर्थः । तेभ्योऽपि शपो लुक् परस्मैपदञ्च । बोभवीति । वावदीति ।

**इति षसप्रभृतयः परस्मैभाषाः ।**

---

(१९) इदमस्मिन् गणे गणसूत्रमेकम् ।

७१. **ह्नुङ् अपनयने** । ह्नुते । ह्नुवाते । ह्नुवते । पुत्रायापह्नुते वणिक् । देवदत्तायापह्नुते । देवदत्तमपह्नुते । निजुह्नुवे । ह्नोता । निजुह्नूषते । ह्नुतः । अपह्नुतिः ॥७२॥

**इति आत्मनेभाषोऽनुदात्तः** । अयमात्मनेपदीति पूर्वमुकारान्तमध्येऽजन्तवर्गे नोपदिश्यते ।

वृत् इत्यदादिपरिसमाप्तेः ।

**इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ**
**धातुप्रदीपेऽदादीनां वृत्तिः ॥२॥**

---

# अथ जुहोत्यादय उच्यन्ते

**१. हु दाने**। आदानेऽप्येके। जुहोति। जुहुतः। जुह्वति। अत्राद्विर्वचन-निमित्तेऽचि यणादेशः कृत इति **द्विर्वचनेऽचि** (१।१।५९) इति स्थानि-वद्भावो न प्राप्नोति। ततश्चानच्कत्वाद् द्विर्वचनं भवितुं नार्हतीति न शङ्कनीयम्। कृते हि द्विर्वचने **एरनेकाचोऽसंयोगपूर्वस्य** (६।४।८२) इत्यनुवृत्तेः **हुश्नुवोः सार्वधातुके** (६।४।८७) इति यणादेशविधानात्। जुहाव जुहवाञ्चकार। जुहुवतुः। जुहुवुः। जुहोतु। जुहुधि। जुह-वानि। अजुहोत्। अजुहुताम्। अजुहवुः। अहौसीत्। अहौष्टाम्। अहौषुः। जुह्वत्, जुह्वतौ। होता। हुतम्। हविः ॥१॥

**२. ञिभी भये**। बिभेति। बिभीतः बिभितः। बिभ्यति। बिभाय बिभयाञ्चकार। अभैषीत् (१)। भीषयते मुण्डो भापयते वा, शरैर्भाय-यति। भीतमस्य। भयम्। भीतिः। भीः, भियौ ॥२॥

**३. ह्री लज्जायाम्**। जिह्रेति। जिह्रीतः। जिह्रियति। जिह्राय जिह्रयाञ्चकार। ह्रेता। अह्रैषीत्। ह्रयः। ह्रीणः ह्रीतः। ह्रीः ।३

**४. पृ पालनपूरणयोः**। पिपर्त्ति। पिपृतः। पिप्रति। पपार। पप्रतुः। पप्रुः। पर्त्ता। पृणाति पूर्त्तमिति क्र्यादिपाठात्। दीर्घान्तं केऽपि पठन्ति। पिपर्त्ति। पिपूर्त्तः। पिपूरति ॥४॥

**एते परस्मैभाषा** इति परस्मैपदिनः।

**५. डुभृञ् धारणपोषणयोः**। बिभर्त्ति बिभृते। बिभृतः बिभ्राते। बिभ्रति बिभ्रते। बभार बिभराम्बभूव बिभरामास बिभराञ्चकार

---

(१) गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेष्वित्यत्र (२।३।६७) केचिद् बिभेतेर्ङसौ निर्देश इत्याहुः। तत्र एरनेकाच इति (६।४।८२) यण्। तेनास्य लुङि अभैदित्यादीति च वदन्ति। अत एव मा भैः शशाङ्क मम शीधुनि नास्ति राहुरिति। अन्ये त्वैतन्न सहन्ते। तथा च भट्टिः मा स्म भैषीस्त्वयाद्यैव कृतार्थो द्रक्ष्यते पतिरिति। मा भैषीः पुत्रि सीते व्रजति मम पुरो नैष दूरं दुरात्मेति च महानाटके। वस्तुतस्तु मा भैरित्यादि पदं प्रामादिकमेवेति बहवः। एकान्ततः समर्थनाग्रहे त्वागमशासनमनित्यमिति यथाकथञ्चित् समाधेयम्।

बभ्रे बिभराञ्चक्रे। बिभ्रत्, बिभ्रतौ। अबिभः अबिभृत। अबिभृताम् अबिभ्राताम्। अबिभरुः अभिभ्रत। भर्त्ता। भरिष्यति। भृत्यः। भार्य्या। भारः। भरणम्। भृत्या। भृतिः। भृत्रिमम्। भरथुरित्यन्ये (२)। इति **उभयतोभाष** इत्युभयपदी। **भृञामित्** (७।४।७६) इति कार्य्यानुरोधेनायमन्येषूभयपदिषु न पठ्यते ॥५॥

६. **माङ् माने शब्दे च**। मिमीते। प्रणिमिमीते। मिमाते। मिमते। मीयते। प्रणिमीयते। ममे, ममाते। माता। मित्वा। मितः। धान्यमायः। व्योममायः ॥६॥

७. **ओहाङ् गतौ**। जिहीते। जिहाते। जिहते। उद्धायते रविणा। हाता। हात्वा। हानः, हानवान् ॥७॥

**इति आत्मनेभाषौ**।

८. **ओहाक् त्यागे**। ककारो **हश्च व्रीहिकालयोः** (३।१।१४८) इति सामान्यग्रहणाविघातार्थः (३)। जहाति। जहीतः जहितः। जहति। हीयते। जहौ। जहतुः। जहुः। जहिहि जहाहि जहीहि। जह्यात्। जह्याताम्। अहासीत्। अहासिष्टाम्। सार्थाद्धीनः। हानिः। हित्वा विहाय। **इति परस्मैभाषः**। आकारान्तप्रकरणानुरोधेन पूर्वं न निर्दिश्यते ॥८॥

९. **डुदाञ् दाने**। ददाति दत्ते। दीयते। ददौ ददे। ददतुः ददाते। अददात् अदत्त। अदत्ताम् अददाताम्। अददुः अददत। देहि दत्स्व। दद्यात् ददीत। देयात् दासीष्ट। अदात् अदित। अदाताम् अदिषाताम्। अदुः अदिषत। ददत् ददानः। दत्रिमम्। दत्त्वा। प्रदाय। दत्तम्। प्रत्तम् प्रदत्तम्। प्रदः। प्रदा ॥९॥

१०. **डुधाञ् धारणपोषणयोः**। दधाति धत्ते। धत्तः दधाते। दधति दधते। दधासि धत्से। धीयते। विहितम्। संविधानम्। हित्वा विधाय। हित्रिमम्। धान्यम् (४)। दानेऽप्येके **"द्विषता विहितम्"** इति ॥१०॥

---

(२) चान्द्रा इमं टुभृञिति पठन्ति।

(३) अन्यथा एकानुबन्धकत्वादस्यैव ग्रहणं स्यात्। जहाति भावान् जिहीते प्राप्नोति वा हायनो वर्षम्। जहाति जिहीते वोदकं हायनो व्रीहिः।

(४) दधातेर्यन्नुट् चेति यत् (उण्, ५।४८)।

११. **निजिर् शौचपोषणयोः**। नेनेक्ति नेनिक्ते। नेनिक्तः नेनिजाते। नेनिजति नेनिजते।। प्रणेनेक्ति। नेक्ता। अनेनेक् अनेनिक्त। अनेनिक्ताम् अनेनिजाताम्। अनेनिजुः अनेनिजत। अनैक्षीत् अनीजत् अनिक्त। नेजयति। अनीनिजत्। प्रणिनिक्षति निनिक्षते। नेनिजत् नेनिजानः। नेनिजतौ नेनिजानौ। निक्तम्। निर्णेजकः। निजम्।।११

१२. **विजिर् पृथग्भावे**। वेवेक्ति वेविक्ते। विवेज विविजे। वेक्ता। अविजत् अवैक्षीत् अविक्त।।१२।।

१३. **विष्लृ व्याप्तौ**। वेवेष्टि वेविष्टे। वेविष्टः वेविषाते। वेविषति वेविषते। वेवेष्टु वेविष्टाम्। वेवेषाणि वेविषै। वेष्टा। अविक्षत अविषत्। विषम्। वेषः। वेष्यो नटः। परिवेषः। विष्णुः ।।१३।।

**इति उभयतोभाषाः**। विभाषिता इत्युभयपदिनो डुदाञादयः।

**वृत्** इति निजादिपरिसमाप्तेः। वृत्करणमिदं वैचित्र्यार्थम्, **णिजां त्रयाणाम्** (७।४।७५) इत्यत्र त्रयाणामित्यस्योपादानादिति **न्यासः**।

१४. **गृ घृ क्षरणदीप्त्योः**। जगर्त्ति। जिघर्त्ति (५)। घरति घारयतीति गणान्तरपाठात्।।१४,१५।।

१५ हृ **प्रसह्यकरणे**। जिहर्त्ति (६)। हृतम्। पश्यतोहरः।।१६।।

१६. **ऋ सृ गतौ**। इयर्ति। इयृतः। इयृति। समियृते। समियृाते। आर। आरतुः। आरुः। आरत्। आरताम्। आरन्। (७) समारन्त। इयृयात्। ऐयः। ऐयृताम्। ऐयरुः। सर्सत्ति। ससृतः। ऋच्छति सरतीति भ्वादिपाठात्।।१७,१८।।

---

(५) बहुलञ्छन्दसीतीत्त्वम् (७।४।७८)। गृ इति मान्द्राजपुस्तकद्वये नास्ति। न च माधवभट्टोजिग्रन्थयोः। जघर्तीति च वङ्गीयपुस्तके क्वचित् इत्वहीनः पाठः। एवं परत्र च।

(६) अत्रापीत्वम्। अयं स्रुवोऽभिजिहर्त्ति होमादिति प्रयोगात्।

(७) समारन्त ममाभीष्टाः सङ्कल्पास्त्वय्युपागत इति भट्टिः। बहुलञ्छन्दसीत्येव (७।४।७८) सिद्धे अर्त्तिपिपर्त्योश्चेति (७।४।७७) इत्त्वविधानादयं भाषायामपीति सर्वेषां मतम्।

**१७. भस भर्त्सनदीप्त्योः**। बभस्ति। बभस्तः। बभसति। भसितम्। भस्म। नभः (८) ॥१९॥

**१८. कि कित ज्ञाने**। चिकेति। चिकितः। चिक्यति। चिकेत्ति। चिकित्तः। चिकितति ॥२०,२१॥

**१९. तुर त्वरणे**। तुतोर्त्ति। तुतूर्त्तः। तुरः। तुरगः तुरङ्गः तुरङ्गमः। तुरितम्। तुतुरति ॥२२॥

**२०. धिष शब्दे**। दिधेष्टि। दिधिष्टः। धिषितम् ॥२३॥

**२१. धन धान्ये**। दधन्ति। धनितम् ॥२४॥

**२२. जन जनने**। जजन्ति ॥२५॥

**२३. गा स्तुतौ**। जिगाति ॥२६॥

(1) **छन्दसीति** (९)। इमौ जनगाधातूच्छान्दसा वित्यर्थः। घृप्रभृतयोऽपिच्छन्दसीत्यनेन सम्बध्यन्त इति **केचित्**।

**वृत्** इति जुहोत्यादिपरिसमाप्तेः।

**इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ धातुप्रदीपे**

**जुहोत्यादीनां वृत्तिः ॥३॥**

———

(८) बभस्तः बभसतीति पाठश्चेत् तर्हि भाषायामयमिति यथाकथञ्चिन्मन्तव्यम्। अन्यथा घसिभसोर्हलि चेति (६।४।१००) च्छन्दसि बब्धः बप्सतीति स्याताम्। वस्तुतस्तु नायं भाषायां प्रयुज्यते।

(९) इदमस्मिन् गणे गणसूत्रमेकम्।

# अथ दिवादय उच्यन्ते

**१. दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिमोदमदस्वप्नगतिषु**। दीव्यति। दिदेव। दिदिवतुः। दिदेविषति दुद्यूषति। देवयति। देवः। अक्षद्यूः। दीव्यन्ती। देवित्वा द्यूत्वा। द्यूतम्। आद्यूनः। क्विप्—द्यूः, द्युवौ। देवा (१) ॥१॥

**२. षिवु तन्तुसन्ताने**। सीव्यति। सिषेव। सिसेविषति सिस्यूषति। सीवनं (२) सेवनम्। स्यूतः। स्यूतिः। सेवित्वा स्यूत्वा। स्यौतिकः। स्योनः ॥२॥

**३. स्रिवु गतिशोषणयोः**। स्रीव्यति। स्रूः। स्रुवौ। स्रुवः(३)।३॥

**४. ष्ठिवु निरसने**। ष्ठीव्यति। तिष्ठेव। तुष्ठ्यूषति तिष्ठेविषति। तेष्ठीव्यते। ष्ठीवतीति भ्वादिपाठात् ॥४॥

**५. ष्णुसु अदने**। स्नुस्यति। सुष्णोस। स्नुषा (४) ॥५॥

**६. ष्णुस निरसन इत्येके**। मिच्च। स्नुस्यति। स्नुसयति। असुष्णुसत्। सुस्नुसिषति। सुष्णुसयिषति ॥६॥

**७. क्नसु क्षरणदीप्तयोः**। क्नस्यति। चक्नास। क्नसयति। घञर्थे कः (३।३।५८, वा)। **क्नजादीनाँ के द्वे** (६।१।१२, वा) चक्नसः। क्नसित्वा क्नस्त्वा। क्नस्तः ॥७॥

**८. व्युष दाहे**। व्युष्यति। वुव्योष। व्युषित्वा व्योषित्वा। व्युषितः ॥८॥

**९. प्लुष च**। प्लुष्यति। प्लुषित्वा प्लोषित्वा ॥९॥

**१०. नृती गात्रविक्षेपे**। नृत्यति। ननर्त्त। नर्त्स्यति नर्त्तिष्यति। नृत्यम्। नृत्तम्। नरीनृत्यते। नर्नर्त्ति नर्नृतीति नरिनृतीति नरीनृ-

---

(१) दिवेर्ऋः (उण्, २।१०१)। "स्वामिनौ देवृदेवरौ" इति।

(२) पृषोदरादित्वाद्वा दीर्घं इति माधवः।

(३) क्वौ ऊठा अजादावुवङ्।

(४) इगुपधकः। सुषमादित्वात् षत्वम्।

तीति नरिनर्त्ति नरीनर्त्ति । निनृत्सति निनर्त्तिषति । ईदित्त्वफलमुक्त-मेव ॥१०॥

**११. त्रसी उद्वेगे** । त्रस्यति त्रसति । तत्रास । तत्रसतुः त्रेसतुः । त्रस्तः । त्रस्तवान् ॥११॥

**१२. कुथ पूतीभावे** । कुथ्यति । चुकोथ । कुथः । कुथितमनेन । प्रकुथितः । कोथित्वा । **नोपधात् थफान्ताद्वा** (१।२।२३) इति नोपध-ग्रहणसामर्थ्यान्नित्यमकित्त्वमिच्छन्ति ॥१२॥

**१३. पुथ हिंसायाम्** । पुथ्यति । पुपोथ ॥१३॥

**१४. गुध परिवेष्टने** । गुध्यति । गुधित्वा । जुगोध ॥१४॥

**१५. क्षिप प्रेरणे** । क्षिप्यति । चिक्षेप । क्षेप्ता । अक्षैप्सीत् । क्षिपः । क्षिपकः । क्षिपका । परिक्षेपी । क्षिपते क्षिपतीति तुदादि-पाठात् ॥१५॥

**१६. पुष्प विकसने** । पुष्प्यति । पुपुष्प । पुष्पम् ॥१६॥

**१७. तिम ष्टिम ष्टीम आर्द्रीभावे** । तिम्यति । तितेम । तेमयति । स्तिम्यति । तिष्टेम । स्तीम्यति । तिष्टीम ॥१६—१९॥

**१८. व्रीड चोदने** । लज्जायाञ्चाभिधीयते । व्रीडयति । विव्रीड । व्रीडा व्रीला ॥२०॥

**१९. इष गतौ** । इष्यति । इयेष । प्रेषिता । प्रेषिष्यति (५) । इषितम् । अन्वेषणा । पर्य्येषणा परीष्टिः । एषित्वा । इषु इच्छायाम् इष आभीक्ष्ण्ये इति गणान्तरे—इच्छति इष्णाति ॥२१॥

**२०. षह षुह शक्त्यार्थे** (६) । सह्यति । विषह्यति । ससाह । सेहतुः । सिसाहयिषति । सुह्यति । सुषोह । **अधेः प्रसहने** (१।३।३३) इत्यत्र सह्यतेः सहतेर्वा निर्देश इति शक्तावुपेक्षायाञ्च उदाहृतं तम-धिचक्रे इति (७) ॥२२॥

---

(५) वृद्धिरेचीति (६।१।८८) वृद्धिं बाधित्वा एङि पररूपमिति (६।१।९४) गुणः ।

(६) चक्यर्थं इति माधवादिषु पाठः । चक्यर्थस्तृप्तिः । फलानां सुहितः ।

(७) तमधिचक्र इति वृत्तिकारेणोदाहृतम् । तस्मिन् शक्तस्तमुपेक्षाञ्चक्र इति वा तस्यार्थ इति भावः ।

२१. **जॄष् झॄष् वयोहानौ** । जीर्य्यति । जजार । जजरतुः जेरतुः । जरिता जरीता । अजरत् अजारीत् । जिजरिषति जिजरीषति जिजीर्षति । जरा । जीर्णम् । जरित्वा जरीत्वा । जर्जरः । झीर्य्यति । झरः । निर्झरः । झर्झरः । झरा ।।२४,२५।।

**इति परस्मैभाषा उदात्ता** एते, क्षिपिस्त्वनुदात्तः। अनिट्प्रकरणेऽजन्तप्रकरणे च तादृशाः परस्मैपदिनो भविष्यन्ति ।

२२. **षूङ् प्राणिप्रसवे** । सूयते । अब्दे अब्दे वा प्रसूयते । प्राणिग्रहणमतन्त्रम्, अप्राणिप्रसवेऽपि वर्तते—सूनं धान्यम् । सुषुवे । सविता सोता । प्रसूनम् । प्रसूनवान् । सूते सुवतीति धात्वन्तरयोः ।।२६।।

२३. **दूङ् परितापे** । दूयते । दुदुवे । दूनः ।।२७।।

२४. **दीङ् क्षये** । दीयते । उपदिदीये । उपदाता । दास्यते । अदास्त । दीनः। दिदीषत इति दाधाघ्वदा**प्** (१।१।२०) इत्यत्र **भाष्ये** उदाहृतम् । **कालापास्तु** दीङः सनीत्यात्त्वमिच्छन्तो दिदासत इत्युदाहरन्ति (८) । देदीयते। दीत्वा उपदाय ।।२८।।

२५. **डीङ् विहायसा गतौ** । डीयते । डिड्ये । उड्डीनः । डयतेः परस्य निष्ठाप्रत्ययस्य कित्त्वप्रतिषेध इडागमश्चेष्यत इति डयितो डयितवानिति भ्वादौ व्याहृतम् ।।२९।।

२६. **धीङ् अनादरे** । धीयते । दिध्ये । धेता । धीत्वा । धीनः । दिधीषते ।।३०।।

२७. **मीङ् हिंसायाम्** । मीयते । मिम्ये । मेता । मीनः । मीनवान् । मीत्वा । मेतुम् । मित्सते (९) । निमाता प्रमातेति मिञ्मीञो रूपम् ।।३१।।

२८. **रीङ् श्रवणे** । रीयते । रिर्य्ये । रीणः ।।३२।।

२९. **लीङ् श्लेषणे** । लीयते। लिल्ये । विलेता विलाता । विलेष्यते

---

(८) दिदासत इति ब्रुवत इति ङपुस्तके पाठः । तच्चापाणिनीयम् । इको झलिति (१।२।९) सनः कित्त्वादेज्विषयाभावादत्र नात्त्वम्। एवमुपदित्सत इत्यपि न दीङो रूपम् । सूत्रवार्त्तिकभाष्यविरोधात् ।

(९) अन्ये तु मिमीषत इत्येव सनि रूपम्, इस्भावस्तु मीनातिमिनोत्योरेवेत्याहुः ।

विलास्यते । जटाभिरालापयते । घृतं विलीनयति विलाययति विलापयति विलालयति । लिलीषते । लीनः । विलयः । विलाय विलीय लीत्वा । लीनातीति क्र्यादिपाठात् ।।३३।।

३०. **व्रीङ् वृणोत्यर्थे** । व्रीयते । विव्रिये । व्रयः । व्रीणः ।(1)**स्वादय ओदितः** (१०) । ओदित्त्वस्य फलम् **ओदितश्च** (८।२।४५) इति निष्ठानत्वम् ।।३४।।

३१. **पीङ् पाने** । पीयते । पिप्ये । पेता । पीतम् । पेयम् । आपीय ।।३५।।

३२. **माङ् माने** । मायते । मीयते । ममे । मित्सते । मितम् ।३६।

३३. **ईङ् गतौ** । ईयते । अयाञ्चक्रे । **केचिद्** व्यपदेशिवद्भावमनादृत्यामोऽभावमाहुः—ईये, ईयाते । ऐष्ट । ऐषाताम् । उपेयम् यत् । इणस्तु उपेत्ययम् ।।३७।।

३४. **प्रीङ् प्रीतौ** । प्रीयते । (११) पिप्रिये । प्रीणातीति क्रैयादिकस्य प्रीञो रूपम् ।।३८।।

**इति आत्मनेभाषा** एते दीङादय आत्मनेपदिनो **डीङ्वर्जमनुदात्ताः** ।

३५. **शो तनूकरणे** । श्यति । श्यतः । शशौ । शशतुः । अशात् अशासीत् । शाययति । निशातं निशितम् । शात्वा शित्वा ।।३९।।

३६. **छो छेदने** । छ्यति । छ्यतः । चच्छौ । अपचाच्छायते । चिच्छासति । छाया । छात्वा छित्वा । अवच्छितम् अवच्छातम् ।४०।

३७. **षो अन्तकर्मणि** । स्यति । अभिष्यति । प्रणिष्यति । सीयते । स्यतु । स्यताम् । स्य—**अतो हेः** (६।४।१०५)इति हेर्लुक् । स्यानि । स्येत् । अवसितम् । सित्वा अवसाय ।।४१।।

३८. **दो अवखण्डने** । द्यति । प्रणिद्यति । ददौ । देयात् । अदात् । देदीयत । दित्सति । दित्वा अवदाय । दितम् । परीत्तम् । निर्दितम् ।४२

**इति परस्मैभाषाः** । एते परस्मैपदिनः ।

---

(१०) इदमस्मिन् गणे गणसूत्रमेकम् ।

(११) प्रकाममप्रीयत यज्वनां प्रिय इति माघेऽस्य प्रयोगः ।

३९. **जनी प्रादुर्भावे**। जायते। जज्ञे। जनिता। अजनि अजनिष्ट। जाजायते जञ्जन्यते। जिजनिषते। जनयति। जातः। जातिः। जनः। जनता। जन्यो घटः। जन्यं घटेन। जन्या। जन्तुः। प्रजनः। प्रजनिष्णुः। प्रजा। सुप्रजाः। सुप्रजसौ। वीजम्✻ ॥४३॥

४०. **दीपी दीप्तौ**। दीप्यते। दिदीपे। दीपिता। अदीपि अदीपिष्ट। अदीदिपत् अदिदीपत्। दीप्तः। दीप्तिः। प्रदीपः। दीप्रः।४४

४१. **पूरी आप्यायने**। पूर्य्यते। पुपूरे। पूरणम्। पूरः। पूः। पूर्णम् पूरितम्। पूर्त्तिः। पूर्णिमा ॥४५॥

४२. **तूरी त्वरर्णाहिंसयोः**। तूर्य्यते। तुतूरे। अतूरिष्ट। तूर्णः। तूर्य्यम् ॥४६॥

४३. **धूरी गूरी हिंसागत्योः**। धूर्य्यते। दुधूरे। धूर्णः। गूर्य्यते। जुगूरे। गूर्णः ॥४७,४८॥

४४. **घूरी जूरी हिंसावयोहान्योः**। घूर्य्यते। जुघूरे। घूर्णम्। जूर्य्यते। जुजूरे। जूर्णः ॥४९,५०॥

४५. **शूरी हिंसास्तम्भनयोः**। शूर्य्यते। शुशूरे। शूर्णः ॥५१॥

४६. **चूरी दाहे**। चूर्य्यते। चूचूरे। चूरिता। चूर्णम् ॥५२॥

४७. **तप ऐश्वर्य्ये वा**। तप्यते। तेपे। तप्ता। तपतेरैश्वर्य्यार्थे दैवादिकत्वम्, आत्मनेपदित्वञ्च। वाग्रहणादैश्वर्य्येऽपि तपतीत्येके। पत इति चैके। पत्यते पतति (१२)। **अपरे** तु **वावृतु वरण** इति परस्मिन् वाग्रहणं सम्बध्य धातुमेकार्थमनेकाचं मन्यन्ते वावृतु वरण इति वावृत्यते। "**ततो वावृत्यमानासौ रामशालां न्यविक्षत**" इति (१३) ॥५३॥

४८. **वृतु वरणे**। वृत्यते। ववृते। वर्त्तित्वा वृत्त्वा। वृत्तम् ॥५४॥

४९. **क्लिश उपतापे**। क्लिश्यते। चिक्लिशे। क्लेशिता। क्लिष्टः क्लिशितः। क्लेश्यम्। क्लेशः। क्लिशित्वा क्लिष्ट्वा। क्लिश्नातीति क्लिशू विबाधन इति क्र्यादिपठितस्य ॥५५॥

---

(१२) अत्रापि ऐश्वर्य्ये तङ्श्यनौ वा। पक्षे शप् परस्मैपदञ्च।

(१४) अनेकाच्त्वाल्लिटि आम्। वावृताञ्चक्रे।

✻ विपूर्वाज्जनेर्डः, अन्येषामपि दृश्यते (६।३।१३७) इति दीर्घत्वम्। यु० मी०

**५०. काशृ दीप्तौ ।** काश्यते । चकाशे । अचकाशत् । काशत इति भ्वादावुक्तः ॥५६॥

**५१. वाशृ शब्दे ।** वाश्यते । ववाशे पक्षी । अववाशत् । वाशितम् ॥५७॥

**इति आत्मनेभाषा अनुदात्तेत** इति एते जनीप्रभृतयः ।

**५२. मृष तितिक्षायाम् ।** मृष्यते मृष्यति । परिमृष्यति । ममर्ष ममृषे । मर्षितः । अपमृषितम् । दुर्मर्षणः । अमर्षणः ॥५८॥

**५३. ईशुचिर् पूतीभावे ।** शुच्यति शुच्यते । शुशोच शुशुचे । अशुचत् अशोचीत् अशोचिष्ट । शुचित्वा शोचित्वा । शुशुचिषति शुशोचिषति । शुक्तम् । शुक्तिः । शोचतीति शुच शोक इत्यस्य रूपम् ॥५९॥

**५४. णह बन्धने ।** नह्यति नह्यते । प्रणह्यति । ननाह नेहे । नेहतुः नेहाते । नद्धा । नत्स्यति नत्स्यते । समनात्सीत् समनद्ध । समनाद्धाम् समनत्साताम् । समनात्सुः समनत्सत । निनत्सति निनत्सते । नानह्यते । नद्ध्री । उपानत् उपानहौ । सन्नह्यतेऽनेनेति सन्नाहः । नद्धम् । नद्धुम् । नद्ध्वा प्रणह्य ॥६०॥

**५५. रन्ज रागे ।** रज्यति रज्यते । ररञ्ज ररञ्जे । रक्तम् । रङ्क्तुम् । रङ्क्त्वा रक्त्वा । रजति रजत इति भ्वादिपाठात् ॥६१॥

**५६. शप आक्रोशे ।** शप्यति शप्यते । शपति शपत इति भ्वादिपाठात् ॥६२॥

**इति उभयतोभाषाः ।** उभयपदिन एते मृषप्रभृतयः । **णहादयस्त्वनुदात्ताः ।**

**५७. पद गतौ ।** पद्यते । पेदे । पत्ता । पदनः । पादुका (१४) । पादः । सम्पत् । सम्पत्तिः । विपादिका । पदम् । उपपादकः । उपपादुकः । उत्पन्नः ॥६३॥

---

(१४) णित्कसिपद्यर्त्तेरिति (उण्, १।८५) पद्यतेरूः । पादूः । ततः संज्ञायाञ्चेति (५।२।९७) कन्, टाप् । केऽणः (७।४।१३) इति ह्रस्वः पादुका ।

५८. **खिद दैन्ये** । खिद्यते । चिखिदे । खेत्ता । खित्त्वा । खिन्नः । खेदः । खिन्ते इति रौधादिकस्य ॥६४॥

५९. **लिश अल्पीभावे** । लिश्यते । लिलिशे । लेष्टा । लेक्ष्यते । अलिक्षत । लेशो मात्रा । लिशतीति तौदादिकस्य ॥६५॥

६०. **विद सत्तायाम्** । विद्यते । विविदे । वेत्ता । विन्नः । निर्विण्णः ॥६६॥

६१. **बुध अवगमने** । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । अबोधि अबुद्ध । अभुत्साताम् । अभुत्सत । माणवकं धर्म्मं बोधयति । बोधति बोधत इति भौवादिकस्य ॥६७॥

६२. **युध संप्रहारे** । युध्यते । युयुधे । योद्धा । युयुत्सते । योधः ॥६८॥

६३. **अनो रुध कामे** । अनौ उपसर्गे रुधेः कामवृत्तेर्दिवादित्व-मात्मनेपदित्वञ्च । अनुरुध्यते । अनुरुरुधे । अनुरोद्धा । अनुरोधः ।६९

६४. **अन प्राणने** । अन्यते । आने । अनिता । अनतीति भ्वादौ रूपम् (१५) ॥७०॥

६५. **मन ज्ञाने** । मन्यते । मेने । मन्ता । मत्वा । मतमस्य । मतिः । दर्शनीयमानी भार्य्यायाः । शूरम्मन्यः शूरमानी । मनः ॥६१॥

६६. **युज समाधौ** । युज्यते । युयुजे । योक्ता ।।७२॥

६७. **सृज विसर्गे** । सृज्यते (१६) । ससृजे । स्रष्टा । असृष्ट ।७३

**इति आत्मनेभाषाः** ॥

६८. **राधोऽकर्मकाद् वृद्धावेव** । वृद्धिग्रहणमकर्मकक्रियोपलक्षणम् । अत एव सकर्मकक्रियाव्यावृत्तयेऽकर्मकादित्युक्तम् । एवकारेण च सकर्मकक्रियाव्यावृत्तिर्द्योत्यते । राध्यति तरुणता । राध्यत्योदनः स्वय-

---

(१५) अयं मूर्धन्ययुक्तः पठ्यते । तत्र तवर्गीयान्तकाण्डानुसरणं न भवति । ङपुस्तके अयं दन्त्ययुक्तः । घचिह्नितमान्द्राजपुस्तकेऽपि तथा । गचिह्नित मान्द्राजपुस्तके तु मूर्धन्ययुक्तः । [वस्तुतस्तु अत्र 'अण्' इति मूर्धन्यान्तः पाठ एव मैत्रेयस्य भ्वादौ तथैव पाठात् । नान्तस्त्वदादौ पठ्यते] ।

(१६) संसृज्यते सरसिजैररुणांशुभिन्नैरिति रघुकाव्ये प्रयोगः ।

मेव (१७)। देवदत्ताय राध्यति। "यन्मह्यमपराध्यति" (१८)। राद्धा। रात्स्यति। अरात्सीत्। सकर्मकत्वे वृद्धेरन्यत्र राध्नोति ।७४।

**६९. व्यध ताडने**। विध्यति। विव्याध। विविधतुः। व्यद्धा। व्यत्स्यति। अव्यात्सीत्। अव्याद्धाम्। विव्यत्सति। वेविध्यते। व्याधः। विद्धा। मृगावित्। व्यधः। उपव्याधः ॥७५॥

**७०. पुष पुष्टौ**। पुष्यति। पुपोष। पोष्टा। पोक्ष्यति। अपुषत्। अपुषताम्। अपोषि। अपुक्षाताम्। व्यत्यपुक्षत। अपूपुषत्। पुपुक्षति। पोपुष्यते। स्वपोषम्। पुष्यः ॥७६॥

**७१. शुष शोषणे**। शुष्यति। शुशोष। शोष्टा। शोक्ष्यति। अशुषत्। शुष्कम् ॥७७॥

**७२. तुष तुष्टौ**। तुष्यति। तुतोष। तुतुषतुः। तोष्टा। तोक्ष्यति। अतुषत्। तुष्टः ॥७८॥

**७३. दुष वैकृत्ये**। दुष्यति। दुदोष। दोष्टा। अदुषत्। दोषयति दूषयति। दोषी। दोषणं दूषणम्। दोषः ॥७९॥

**७४. श्लिष आलिङ्गने**। श्लिष्यति। शिश्लेष। श्लेष्टा। श्लेक्ष्यति। अश्लिक्षत् कन्याम् (१९)। समाश्लिषज्जतु काष्ठम्। व्यत्यश्लिक्षत। विश्लेषः ॥८०॥

**७५. शक विभाषितो मर्षणे**। शक्यति शक्यते। शशाक शेके। शक्ता। शक्ष्यति शक्ष्यते। अशकत् अशक्त। शक्त्वा। शक्तः। शकितः। मर्षणं क्षमा। ततोऽन्यत्र शक्नोतीति। विभाषितेष्वयं न पठ्यते। अशकदिति मर्षणे पुषादिकार्य्यार्थम्। शक्त्यर्थस्य तु कर्त्रभि-

---

(१७) कर्मवत्सूत्रे (३।१।८७) अयं भाष्यकारस्य प्रयोगः। अत्र हि सिध्यतीत्यर्थः।

(१८) न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति। क्रियासमभिहारेण विराध्यन्तं क्षमेत क इति माघपद्यमिदम। अपराध्यति द्रुह्यति। विराध्यन्तं द्रुह्यन्तमित्यर्थः।

(१९) कर्मणि आलिङ्गने क्सः। अनालिङ्गने तु अङेव। [आलिङ्गने कर्मणि] एकवचने तप्रत्यये चिण् परत्वात्—अश्लेषि। अश्लिक्षाताम्। अश्लिक्षन्त। अन्यत्र अश्लेषि। अश्लिक्षाता। अश्लिक्षत।

प्रायेऽकर्त्रभिप्रायेऽप्यशकदिति (२०) ॥८१॥

७६. **ञिष्विदा गात्रप्रक्षरणे**। स्विद्यति। सिष्वेद। स्वेत्ता। स्वेत्स्यति। अस्विदत्। स्विन्नम्। स्विन्नवान्। स्विन्नमस्य। प्रस्वेदितः प्रस्विन्नः। स्वेदः। स्वेदत इति ञिष्विदा स्नेहनमोचनयोरित्यस्य रूपम् ॥८२॥

७७. **क्रुध कोपे**। क्रुध्यति। चुक्रोध। क्रोद्धा। क्रोत्स्यति। अक्रुधत्। क्रोधनः। क्रुद्ध्वा। क्रुद्धः। क्रोधः ॥८३॥

७८. **क्षुध बुभुक्षायाम्**। क्षुध्यति। चुक्षोध। क्षोत्ता। क्षोत्स्यति। अक्षुधत्। क्षुत्। क्षुधा। क्षुधितः ॥८४॥

७९. **शुध शौचे**। शुध्यति। शुशोध। शोद्धा। शोत्स्यति। अशुधत्। विशुद्धः। विशुद्धिः ॥८५॥

८०. **षिधु संराद्धौ**। सिध्यति। अभिसिध्यति। सिषेध। सेद्धा। असिधत्। सेधित्वा सिधित्वा सिद्ध्वा। सिद्धम्। सिध्यः। सिद्धिः। अन्नं साधयति ॥८६॥

**इति नहिप्रभृतयोऽनुदात्ताः अन्यतिवर्जम्।**

८१. **रध हिंसासंराद्ध्योः**। रध्यति। ररन्ध। ररन्धतुः। ररन्धिव। ररन्धिम। नित्यत्वात् परत्वाच्च नुमि कृते संयोगान्तत्वात् कित्त्वं नास्तीति नलोपाभावः। अरधत्। लभा, उपलभ्यत इत्यादौ नलोपो भवत्येव, निमित्तस्यानुपघातात्। रधिता रद्धा। रत्स्यति रधिष्यति। अरन्धि। रन्धकः। रन्धनम्। रद्धः ॥८७॥

८२. **णश अदर्शने**। नश्यति। प्रणश्यति। ननाश। नेशतुः। नंष्टा नशिता। नङ्क्ष्यति नशिष्यति। अनशत्। नष्ट्वा नंष्ट्वा नशित्वा प्रणश्य। नश्वरः। जीवनाशं नश्यति। प्रनष्टः ॥८८॥

८३. **तृप प्रीणने**। तृप्यति। अतार्प्सीत् अत्राप्सीत् अतर्पीत् अतृपत्। तर्पित्वा तृप्त्वा। तृप्तः। तृप्तिः। स्वादिपाठात् तृप्नोति

---

(२०) शक्नोतेः परस्मैपदित्वात्। लृदित्वात् तस्यापि लुङि कर्तरि अशकदिति भवति। विभाषितो मर्षण इति। शक मर्षणार्थे दिनादिर्भवति। विभाषित इत्युभयपदीत्यर्थः। तन्त्रान्तरप्रसिद्धया विभाषित इत्यत्रोच्यते। अयं पटः प्रावरितुं न शक्यत इति मृच्छकटिकेऽस्य कर्तरि प्रयोगः।

तृपितः। **न्यासकृता** तु स्वादावपठितत्वात् तृप्नोतीति क्षुभ्नादिपाठज्ञापकात् साधितम् ॥८९॥

८४. **दृप हर्षणमोचनयोः**। दृप्यति। अदृपत् अदार्प्सीत् अद्राप्सीत् अदर्पीत्। दृप्तः। दर्पणः। दर्पकः ॥९०॥

८५. **द्रुह जिघांसायाम्**। द्रुह्यति। द्रोहिता द्रोढा द्रोग्धा। ध्रोक्ष्यति द्रोहिष्यति। अद्रुहत्। द्रोहित्वा द्रुहित्वा द्रुग्ध्वा द्रूढ्वा। द्रुग्धं द्रूढम्। मित्रध्रुट् मित्रध्रुक्। द्रोही ॥९१॥

८६. **मुह वैचित्त्ये**। मुह्यति। मोग्धा मोढा मोहिता। मोहिष्यति मोक्ष्यति। अमुहत्। मुग्धः मूढः। मुक् मुट्। मोहकः ॥९२॥

८७. **ष्णुह उद्गिरणे**। स्नुह्यति। सुष्णोह। स्नोग्धा स्नोढा स्नोहिता। अस्नुहत्। सुस्नोहिषति सुस्नुक्षति सुस्नुहिषति ॥९३॥

८८. **ष्णिह प्रीतौ**। स्निह्यति। "**न च स्निह्यति कस्यचित्**"। सिष्णेह। स्नेहिता स्नेग्धा स्नेढा। अस्निहत्। स्निग्धं स्नीढम्। स्निक् स्निट्। उष्णिक् ॥९४॥

**वृत्** इति रधादिपरिसमाप्तेः। रधादयोऽष्टौ गताः। तेभ्यो **रधादिभ्यश्च** (७।२।४५) इतीड्विकल्पः।

अनन्तरं **शमादयः**। तेषां दीर्घत्वं घिनुण् च। दिवाद्यन्तर्गणस्य पुषादेरिमावन्तर्गणौ। घत्वविधावपि (२१) **वा द्रुहादीनामिति** गणनिर्देशो न क्रियते। वैचित्र्यार्थमित्**येके**। यङ्लुगनिवृत्त्यर्थमित्**यपरे**। गणनिर्देशे हि व्यावृत्तिरुच्यते। तथाहि—

**"श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च।**
**यच्चैकाज्ग्रहणं किञ्चित् पञ्चैतानि न यङ्लुकि॥१॥"** इति (२२)

८९. **शमु उपशमे**। शाम्यति रोगः। शशाम। शमिता। अशमत्।

---

(२१) वा द्रुहमुहस्नुहस्निहामिति (८।२।३३) सूत्रेण दादेर्धातोर्घ इत्यनुवृत्तौ (८।२।३२)।

(२२) तेनैषां यङ्लुकि दोद्रोग्धि दोद्रोहीति दोध्रोढि, मोमोहीति मोमोग्धि मोमोढि, सोष्णोहीति सोष्णोग्धि सोष्णोढि सेष्णेहीति सेष्णेग्धि, सेष्णेढि। यङि च दोद्रुह्यते। सोष्णुह्यते। सेष्णिह्यते इति।

शमो । शमित्वा शान्त्वा । शान्तः । शान्तिः । उपशमः । शमनः । प्रशान् तरति । स्वरादिपाठादव्ययम् प्रशानिति ॥९५॥

९०. **तमु काङ्क्षायाम्** । ताम्यति । अतमत् । प्रतान् । प्रतामौ । प्रतामः । तमी । तमिता ॥९६॥

९१. **दमु उपशमे** । दाम्यति । अदमत् । अरिं दाम्यतीति अरिन्दमः । "**दमित्वाप्यरिसंघातान्**" इति भट्टिः । दान्त्वा दमित्वा । दमितः दान्तः । दमी । सकर्मकोऽयमिति शाम्यतिना सह नोपदिश्यते । अस्यार्थनिर्देशे हि ण्यन्तस्य उपशम इति रूपम् ॥९७॥

९२. **श्रमु तपसि खेदे च** । श्राम्यति । अश्रमत् । श्रमी । श्रमणः । कुमारश्रमणा । आश्रमः । विश्रमः । विश्राम इति **चान्द्राः** ॥९८॥

९३. **भ्रमु अनवस्थाने** । भ्राम्यति भ्रमति । अभ्रमत् । भ्रमी । भ्रमः । भ्रान्तिः । भ्रमरः । भ्रम्यति अभ्रमीदिति भ्वादिपाठात् ॥९९।

९४. **क्षमू सहने** । क्षाम्यति । क्षमिता क्षन्ता । अक्षमत् । क्षमित्वा क्षान्त्वा । क्षान्तिः । क्षमूष् सहन इति भौवादिकस्य दोषं क्षमते । अक्षमिष्ट अक्षंस्त । क्षमेति (२३) ॥१००॥

९५. **क्लमु ग्लानौ** । क्लाम्यति । चक्लाम । क्लमिता । अक्लमत् । क्लमी । क्लमः ॥१०१॥

९६. **मदी हर्षे** । माद्यति । ममाद । मदिता । मदिष्यति । अमदत् । मत्तः । मदनः । मदित्वा । मदः । प्रमदः । प्रमादः । उन्मादी । उन्मदिष्णुः ॥१०२॥

वृत् इति शमादिपरिसमाप्तेः ।

९७. **असु क्षेपणे** । अस्यति । निरस्यति निरस्यते । आस । आसतुः । आसुः । असिता । आस्थत् । निरास्थत् निरास्थत । असित्वा अस्त्वा । अस्तम् । प्रासः । प्रासनी ॥१०३॥

९८. **यसु प्रयत्ने** । यस्यति यसति । संयस्यति संयसति । प्रयस्यति । यस्यतु यसतु । यस्यात् । यस्य । यस्यानि । अयसत् । यसित्वा यस्त्वा । यस्तः । आयासयते । आयासी ॥१०४॥

---

(२३) अयं दिवादावषित् । "अषितः क्षाम्यतेः क्षान्तिः क्षमूषः, क्षमतेः क्षमा ।"

**९९. जसु मोक्षणे** । जस्यति । अजसत् ॥१०५॥

**१००. तसु प्रक्षेपे** । तस्यति । तस्यतु । तस्य । तस्यानि । अतसत् ॥१०६॥

**१०१. दसु च** । दस्यति । अदसत् । दस्तः दासितः । दस्युः ।१०७

**१०२. वसु स्तम्भे** । वस्यति । वसित्वा वस्त्वा । वस्तम् । उषितमिति निवासार्थस्य । वसितमिति गणान्तरपाठात् ॥१०८॥

**१०३. व्युष विभागे** । व्युष्यति । अव्युषत् । दाहार्थस्य न पुषादित्वम् । अव्योषीत् ॥१०९॥

**१०४. प्लुष दाहे** । प्लुष्यति । अप्लुषत् । प्लोषतेः प्लुष्णातेश्च अप्लोषीदिति ।॥११०॥

**१०५. विस प्रेरणे** । विस्यति । अविसत् । विसम् ॥१११॥

**१०६. कुस श्लेषणे** । कुस्यति । अकुसत् । कुसितः । कुसितायी ॥११२॥

**१०७. बुस उत्सर्गे** । बुस्यति । अबुसत् । बुसम् ॥११३॥

**१०८. मुस खण्डने** । मुस्यति । अमुसत् । मुसलम् । मुष इत्येके (२४) ॥११४॥

**१०९. मसी प्रमाणे** । मस्यति । अमसत् । मस्तः । मासः । मसूरम् ॥११५॥

**११०. लुट विलोडने** । लुटयति । अलुटत् । लोटतीति भौवादिकस्य । लोटयतीति धात्वन्तरे दर्शितम् (२५) ॥११६॥

**१११. उच समवाये** । उच्यति । उवोच । ऊचतुः । औचत् । मा भावानुचत् । औचिचत्। मा भवानुचिचत् । उचिचिषति । ओचित्वा । उचितम् । उल्वः (२६) ॥११७॥

---

(२४) आत्रेयो दुर्गश्चेमं मूर्धन्यान्तं पपाठ । "राघवस्यामुषः कान्ताम्" इति भट्टिप्रयोगश्चात्रेयेणोदाहृतः ।

(२५) लोटयतीति कण्ड्वादियगन्ताद्रूपम् ।

(२६) उल्वादयश्चेति (उण् ४।९६) चस्य लत्वं गुणाभावश्च । उल्वो गर्भाशयः ।

११२. **भृशु भ्रंशु अधःपतने** । भृश्यति । बभर्श । अभृशत् । भर्शित्वा भृष्ट्वा । भृष्टः । भृशम् । भ्रश्यति । अभ्रशत् । बाभ्रश्यते । भ्रंशः । भ्रंशित्वा भ्रष्ट्वा । भ्रष्टम् । भ्रंशतेस्तु अभ्रंशिष्ट अभ्रशत् बनीभ्रश्यत इति रूपम् ॥११८,११९॥

११३. **कृश तनूकरणे** । कृश्यति । अकृशत् । कृशित्वा कर्शित्वा । कृशः । क्रशिमा । क्रशीयान् । क्रशिष्ठः । कार्श्यम् । कृशानुः । कृशानुरेताः ॥१२०॥

११४. **वृश वरणे** । वृश्यति । अवृशत् ॥१२१॥

११५. **ञितृषा पिपासायाम्** । तृष्यति । अतृषत् । तृषित्वा तर्षित्वा । तृषितमस्य । तृष्णक् । तर्षः । तृष्णा । तृट् ॥१२२॥

११६. **हृष तुष्टौ** । हृष्यति । अहृषत् । हृष्टं लोम हृषितम् लोम । हृषु अलीक इत्यस्य तु हर्षति अहर्षीदिति ॥१२३॥

११७. **रुष रोषे** । रुष्यति । अरुषत् । रोष्टा रोषिता । रुषित्वा रोषित्वा रुष्ट्वा (२७) । रुषितः रुष्टः । रुट् ॥१२४॥

११८. **डिप क्षेपे** । डिप्यति । अडिपत् । डिडेप । डेपः । डिपतीति तुदादिपाठात् ॥१२५॥

११९. **कुप क्रोधे** । कुप्यति । अकुपत् । कुपितः । कोपः ॥१२६॥

१२०. **गुप व्याकुलत्वे** । गुप्यति । अगुपत् । गोपिता ॥१२७॥

१२१. **युप रुप लुप विमोहने** । युप्यति । अयुपत् । रुप्यति । अरुपत् । लुप्यति अलुपत् ॥१२८-१३०॥

१२२. **लुभ गार्ध्ये** । लुभ्यति । लुलोभ । लोभिता लोब्धा । अलुभत् । लोभित्वा लुभित्वा लुब्ध्वा । लुब्धः । लोभः ॥१३१॥

१२३. **क्षुभ सञ्चलने** । क्षुभ्यति । अक्षुभत् । क्षोभः । क्षोभते क्षुभ्नातीति तु गणान्तरपाठात् । पुषादेः पूर्वमस्य पाठेऽपि न दोषः । अक्षुभदिति द्युतादिपाठेनैव सिद्धेः । न चाक्षोभीदिति सिज्निवृत्त्यर्थम् । क्षुभ्नातेः सिचोऽवश्यम्भावात् । भकारान्तप्रकरणानुरोधेन चेहोपदिश्यते ॥१३२॥

---

(२७) तीषसहलुभरुषरिषः (७।२।४८) इतीड्विकल्पः ।

१२४. **णभ तुभ हिंसायाम्** । नभ्यति । प्राणभत् । नभः । नभते नभ्नातीति गणान्तरपाठात् । तुभ्यति । अतुभत् ॥१३३,१३४॥

१२५. **क्लिदू आर्द्रीभावे** । क्लिद्यति । चिक्लेद । क्लेदिता क्लेत्ता । अक्लिदत् । क्लिन्नम् । चिक्लिदम् । क्लेदित्वा क्लिदित्वा क्लित्त्वा ॥१३५॥

१२६. **ञिमिदा स्नेहने** । मेद्यति । अमिदत् । मिन्नम् । मिदित्वा मेदित्वा । मिन्नमस्य मेदितमस्य । प्रमिन्नः प्रमेदितः । मित्रम् । मेदते अमेदिष्ट इति भ्वादिपाठात् ॥१३६॥

१२७. **ञिक्ष्विदा स्नेहनमोचनयोः** । क्ष्विद्यति । चिक्ष्वेद । क्ष्वेदिता । अक्ष्विदत् । क्ष्विण्णमस्य क्ष्वेदितमस्य । प्रक्ष्विण्णः प्रक्ष्वेदितः । क्ष्वेदितुम् क्ष्विदित्वा क्षेदित्वा ॥१३७॥

१२८. **ऋधु वृद्धौ** । ऋध्यति । आनर्द्ध । आनृधतुः । अर्धिता । आर्द्धत् । अर्दिधिषति ईर्त्सति । अर्धित्वा ऋद्ध्वा । ऋद्धम् । समृद्धिः । ऋध्नोतीति सौवादिकस्य ॥१३८॥

१३९. **गृधु अभिकाङ्क्षायाम्** । गृध्यति । जगर्ध । गर्धिता । अगृधत् । गर्धित्वा गृद्ध्वा । गृद्धः । गृध्रः । गृध्नुः । गर्द्धनः ॥१३९॥

**इति परस्मैभाषा उदात्तेत** इति राध्यतिप्रभृतयः परस्मैपदिनः । **शमादयस्तूदात्ताः ।**

**वृत्** इति दिवादेः पुषादेश्च परिसमाप्तेः । **अन्ये** तु पुषादिपरिसमाप्त्यर्थं वृत्करणम्, दिवादयस्त्वपरिसमाप्ता इति क्षीयते मृग्यतीत्यादि सिद्धमित्याचक्षते (२८) ।

**इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ**
**धातुप्रदीपे दिवादीनां वृत्तिः ॥४॥**

———

(२८) तामाशां पथिकस्तथापि नितरां ध्यायन् मुहुः क्षीयत इत्यमरुप्रयोगः ।

१४ # अथ स्वादय उच्यन्ते

१. **षुञ् अभिषवे** । अभिषवः सुरासन्धानं स्नपनं पीडनं स्नानं मन्थनं तेजनं वा । सुनोति सुनुते । सुन्वे सुनोमि । परत्वाद् गुणे कृते **उतश्चप्रत्ययाद्** इत्यनुवृत्तौ (६।४।१०६) **लोपश्चास्यान्यतरस्यां म्वोः** (६।४।१०७) इत्युकारलोपो न भवति । इह तु गुणाभावाद् भवत्युकारलोपः—सुन्वः सुनुवः सुनुवहे सुन्वहे इत्यादि । अभिषुणोति । सुषाव सुषुवे । सोता । अभिसोष्यति । अभ्यषुणोत् । असावीत् असोष्ट । अभिसुसूषति । अभिसुसूः (१) । सुत्वा, सुत्वानौ । सोमसुत् । राजसूयम् ॥१॥

२. **षिञ् बन्धने** । सिनोति सिनुते । सिषाय सिष्ये । सेषीयते । सिसीषति सिसीषते । विषयः । सितम् । सिनो ग्रासः स्वयमेव । सिता पाशेन शूकरी ॥२॥

३. **शिञ् निशाने** । शिनोति शिनुते । शिशाय शिश्ये । शेता । शितम् ॥३॥

४. **डुमिञ् प्रक्षेपणे** । मिनोति मिनुते । ममौ मिम्ये । मिम्यतुः मिम्याते । माता । मास्यति मास्यते । मिनुयात् मिन्वीत । मीयात् मासीष्ट । अमासीत् अमास्त । मित्सति मित्सते । मेमीयते । प्रमाय । प्रमयः । मित्रिमम् । प्रमात्ता ॥४॥

५. **चिञ् चयने** । चिनोति चिनुते । चिकाय चिचाय चिक्ये चिच्ये । चिकीषति चिचीषति । चेचीयते । चाययति चापयति । चिन्वन् चिन्वानः । कायः । निचयः । सञ्चयः । निकायः । निकाय्यम् । अग्निचित् । चित्रम् । चित्रा । चित्रगुः ॥५॥

६. **स्तृञ् आच्छादने** । स्तृणोति स्तृणुते । स्तृणुतः स्तृण्वाते । निस्तर्ता । तिस्तीर्षति । तास्तर्यते । स्तृतम् । स्तृत्वा ॥६॥

---

(१) अभिपूर्वात् सुनोतेः सन्नन्तात् क्विप् । अभिसुसूषतीत्यत्र तु स्तौतिण्योरित्यनेनैव (८।३।६१) षत्वव्यावृत्तिः स्यात् ।

७. **कृञ् हिंसायाम्** । कृणोति कृणुते । चकार चक्रे । चिकीर्षति । चेक्रीयते । कारा बन्धनालयः ।।७।।

८. **वृञ् वरणे** । वृणोति वृणुते । ववार वव्रे । वरिता वरीता । विवरिषति विवरीषति वुवूर्षति । वेव्रीयते । वृतम् । वृतिः । वृत्यम् ।।८।।

९. **धुञ् कम्पने** । धुनोति धुनुते । अधुनोत् अधुनुत । धोता । अधौषीत् अधोष्ट । धुतम् । **"विधुतविपिनराजिः"** । **न्यासकारस्तु स्वरतिसूति** (७।२।४४) इति सूत्रे दीर्घान्तमेतमुक्तवान् । तन्मते धूनोति(२) धुनुते । अधावीत् अधोष्ट अधविष्ट । धूत्वा । धूतः ।।९।।

**इति विभाषिता** एते ।

१० **टुदु उपतापे** । दुनोति । दुदाव । दोता । दुत्वा । दुतः (३) । दवथुः । दवः दावः ।।१०।।

११. **हि गतौ वृद्धौ च** । प्रहिणोति । प्रहिण्वः प्रहिणुवः । प्रहिण्मः प्रहिणुमः । प्रजिघाय । प्रहिणुयात् । प्राजीहयत् जिघीषति । जेघीयते । हेतुः । हेयः ।।११।।

१२. **पृ प्रीतौ** । पृणोति । पपार । पर्त्ता । अपार्षीत् ।।१२।।

१३. **स्पृ प्रीतिपालनयोः** । प्रीतिचलनयोरित्येके । स्पृणोति । पस्पार ।।१३।।

१४. **स्मृ इत्येके** । स्मृणोति । सस्मार ।।१४।।

१५. **आप्लृ व्याप्तौ** । आप्नोति । आप । आप्ता । आपत् । व्याप्य । प्राप्य प्रापय्य । आप्यम् । आपः (४) ।।१५।।

१६. **शक्लृ शक्तौ** । शक्नोति । शशाक, शेकतुः । शक्ता । अशकत् । शक्तः । शक्यम् । शक्रः ।।१६।।

१७. **राध साध संसिद्धौ** । राध्नोति । रराध । आरराधतुः । आर-

---

(२) ऊर्ध्वं धूनोति वायुर्विवृतशवशिरः श्रेणिकुञ्जेषु इति मालतीमाधवे भवभूतिप्रयोगः ।

(३) दून इति दीर्घस्तु दु द्रु गतावित्यस्य । सानुबन्धकत्वात् अस्य तु दुतमिति । तथाहि माघः "मृदुतया दुतयाधरलेखया" इति ।

(४) आप्नोतेर्ह्रस्वश्चेति (उण्, २।५९) औणादिक् क्विप् ।

राधुः । अपरेधतुः । अपरेधुः । राद्धा । रात्स्यति । अरात्सीत् । राध्यतीति वृद्धौ दिवादिः । साध्नोति साद्धा । सिषात्सति (५) । सिषाधयिषति । साधुः ॥१८॥

**इति परस्मैभाषाः** । एते दुप्रभृतयः परस्मैपदिनः । **अनुदात्ताः स्वादयः वृञ् धूञ् वर्जम्** ।

१८. **अशू व्याप्तौ संघाते च** । अश्नुते । व्यानशे । अशिता अष्टा । आशिष्ट आष्ट । अष्टम् । अशाश्यते इति **धातुपारायणे** अस्यैव यङुदाहृतः । **न्यासकारस्तु** अश भोजन इत्यस्य यङ्विधौ ग्रहणमिच्छति ॥१९॥

१९. **ष्टिघ आस्कन्दने** । स्तिघ्नुते । तिष्टिघे । तिस्तेघिषते तिस्तिघिषते । तिष्टेघयिषति । स्तेघित्वा स्तिघित्वा ॥२०॥

**आत्मनेभाषावुदात्तौ** । एतौ आत्मनेपदिनौ ।

**अथ सेट्प्रकरणपरस्मैपदिनो दर्श्यन्ते** —

२०. **तिक तिग च** । चकारेणास्कन्दन इत्यपेक्षते । तिक्नोति । तितेक । तिकितम् । तिकः । तैकायनिः । तिग्नोति । तिग्मम् ।२१,२२

२१. **षघ हिंसायाम्** । सघ्नोति । ससाघ । सिसघिषति । सिषाघयिषति ॥२३॥

२२. **ञिधृषा प्रागल्भ्ये** । धृष्णोति । दधर्ष । धर्षिता । धृष्टमस्य । धर्षितं धृष्टः ॥२४॥

२३. **दम्भु दम्भे** । दभ्नोति । ददम्भ । देभतुः । देभुः । ददम्भतुः ददम्भुरिति **केचिदिच्छन्ति** । दम्भिता । दिदम्भिषति धीप्सति धिप्सति । दम्भित्वा दब्ध्वा । दब्धः ॥२५॥

२४. **ऋधु वृद्धौ** । ऋध्नोति । आनर्द्ध । आनृधतुः ॥२६॥

२५. **तृप प्रीणने** । तृप्नोति । ततर्प । तृपितम् । ऋध्यति तृप्यतीति दिवादिपाठात् ॥२७॥

(1) **छन्दसि** (६)। छन्दसीतीदमधिकृतमागणपरिसमाप्तेः ।

---

(५) केचिदिममषोपदेशमाहुः । तदसत् । षोपदेशलक्षणविरोधात् ।

(६) इदमत्र गणसूत्रमेकम् ।

२६. अह व्याप्तौ । अह्नोति ॥२८॥

२७. दघ घातने । दघ्नोति ॥२९॥

२८. चमु भक्षणे । चम्नोति ॥३०॥

२९. रि क्षि चिरि जिरि दाश दृ हिंसायाम् । रिणोति । क्षिणोति । क्षिणोतीति भाषायामप्यस्य प्रयोजनं* केचिदिच्छन्ति । पञ्चबाणः । क्षिणोतीति (७) कालिदासः । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति ॥३१ – ३६॥

इति परस्मैभाषाः । एते तिकप्रभृतयः परस्मैपदिनः ।

वृत् इति स्वादीनां परिसमाप्तेः ।

इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ धातुप्रदीपे स्वादीनां वृत्तिः ॥५॥

---

* प्रयोगं' इति युक्तः पाठः स्यात् । (यु० मी०)

(७) दूरीभूतं प्रतनुमपि मां पञ्चबाणः क्षिणोतीति मेघदूते । न तद यशः शस्त्रभृतां क्षिणोतीति, इमां हृदि व्यायतपातमक्षिणोदिति च कालिदासः ।

# अथ तुदादय उच्यन्ते

१. **तुद व्यथने**। तुदति तुदते। तोत्ता। तुदन् तुदमानः। तुदती तुदन्ती। तोत्रम्। प्रतोदः। अरुन्तुदः ॥१॥

२. **नुद प्रेरणे**। नुदति। नुदते। प्रणुदते। नुनोद। नोत्ता। नुत्तं नुन्नम्। पुनः परस्मैपदिष्वयं पठिष्यते कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थम् ॥२॥

३. **दिश अतिसर्जने**। दिशति दिशते। दिशतु दिशताम्। अदिशत् अदिशत। दिश्यात् दिक्षीष्ट। अदिक्षत् अदिक्षत। आदिशन् आदिशमानः। दिक्। देशः ॥३॥

४. **भ्रस्ज पाके**। भृज्जति भृज्जते। बभर्ज बभ्रज्ज बभ्रज्जे बभर्जे। बभर्जतुः बभर्जाते बभ्रज्जतुः बभ्रज्जाते। बभ्रज्जुः बभ्रज्जिरे बभर्ज्जुः बभर्जिरे। भ्रष्टा भर्ष्टा। बिभ्रक्षति बिभर्क्षति बिभर्जिषति बिभ्रज्जिषति बिभर्क्षते बिभर्जिषते बिभ्रक्षते बिभ्रज्जिषते। बरीभृज्यते। भर्ग्यं भ्रद्ग्यम्। भर्गः भ्रद्गः। भृष्टम् ॥४॥

५. **क्षिप प्रेरणे**। क्षिपति क्षिपते। अभिक्षिपति। क्षेप्ता। अक्षैप्सीत् अक्षिप्त। परिक्षेपी। परिक्षेपकः। क्षेपः। क्षिप्यतीति दिवादिषु पाठात् ॥५॥

६. **कृष विलेखने**। कृषति कृषते। क्रष्टा कर्ष्टा। अकार्क्षीत् अक्राक्षीत् अकृक्षत् अकृक्षत अकृष्ट। कर्षतीति भौवादिकस्य ॥६॥

**इति उभयतोभाषाः स्वरितेतः अनुदात्ताः।**

७. **ऋषी गतौ**। पूर्वोत्तरधातुसादृश्यानुरोधेन (१) पृथगयं परस्मैपदी निर्दिश्यते। ऋषति। ऋषतः। आनर्ष। आनृषतुः। अर्षिता। अर्षिषिषति। ऋष्टः। ऋषिः। **इति परस्मैभाषोऽयमुदात्तः** ॥७॥

८. **जुषी प्रीतिसेवनयोः**। जुषते। जुजुषे। जोषिता। जोजुष्यते। जुजुषिषते जुजोषिषते। जुष्टः। जुष्यः। सजूः। सजुषौ। सजुषः ॥८॥

(१) पूर्वोत्तरधातुसाहचर्य्यानुरोधेनेति ङपुस्तके पाठः।

९. **ओविजी भयचलनयोः** । उद्विजते । उद्विजिता । उद्विविजिषते । विजित्वा । विग्नः । विग्नवान् (२) । इद्विजितुम् । करणे घञ् वेगः । वेगितः ॥९॥

१०. **ओलजी ओलस्जी व्रीडे** । लजते । लेजे । लग्नः । लज्जते । ललज्जे । लग्नः । लज्जा । नग्नोऽव्रासा इति पृषोदरदित्वाद् वर्णविकारेण तवर्गपञ्चमादिः । लजिलज्ज्योर्भ्वादिपाठाल्लजते लज्जत इति मध्योदात्तत्वं न स्यात् (३) ॥१०, ११॥

**इति आत्मनेभाषा अनुदात्तेत उदात्ताः** ।

११. **ओव्रश्चू छेदने** । वृश्चति । वव्रश्च । वव्रश्चतुः । व्रश्चिता व्रष्टा । वरीवृश्च्यते । विव्रश्चिषति विव्रक्षति । व्रश्चित्वा । वृक्णः । वृक्षः । मूलपरिवृट् ॥१२॥

१२. **व्यच व्याजीकरणे** । विचति । विव्याच । विविचतुः । विव्यचिथ । विविचिथेति **केचित्** । व्यचिता । व्याचयति । विव्यचिषति । वेविच्यते । विचितः । विचित्वा । व्याचकः । उरुव्यचाः ॥१३॥

१३. **उछि उञ्छे** । उञ्छति । उञ्छाञ्चकार । उञ्चिच्छिषति । उञ्छती उञ्छन्ती । उञ्छा । भ्वादौ चास्य पाठः स्वरभेदार्थः (४) ॥१४॥

१४. **उछी विवासे** । उच्छति । व्युष्टिः । "**व्युष्टं कल्ये विपाशिते**" । अयमपि भ्वादौ पठितः । स्वरभेदाय ॥१५॥

---

(२) प्रायेणायमुत्पूर्वः । तथा च चक्रन्द विग्ना कुररीव भूय इति कालिदासः । उद्वेजिता वृष्टिभिराश्रयत्त इति तु णिजन्तात् क्तः ।

(३) लजते लज्जत इति यदा तुदादिस्तदा शप्रत्यये प्रत्ययस्वरेण (३।१।३) मध्योदात्तः । यदा तु भ्वादिस्तदा अनुदात्तौ सुप्पिताविति (३।१।४) शपोऽनुदात्तत्वान्नायं मध्योदात्तः । अपि तु तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोरि (६।१।१८६) त्यनेन लसार्वधातुकतप्रत्ययस्याप्यनुदात्तत्वेनाद्युदात्तोऽयम् ।

(४) कपोतादिवदेकैकशो धान्यादिपरिग्रह उञ्छः । उञ्छ कणश आदानं कणिशाद्यर्जनं शिलमिति यादवः । तौदादिकस्योञ्छतीन्यस्य प्रत्ययस्वरेण मध्योदात्तत्वम् । धातुस्वरेण भौवादिकस्य त्वाद्युदात्तत्वम् । एवमुच्छतीत्यस्यापि ।

१५. **ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु** । ऋच्छति । आनर्च्छ । आनर्च्छतुः । ऋच्छिता । समृच्छिष्यते । ऋचिच्छिषति ।।१६।।

१६. **मिछ उत्क्लेशे** । मिच्छति । "**मिमिच्छ रोगिणं तदा**" । मिमिच्छिषति (५) । १७।।

१७. **जर्च चर्च झर्च परिभाषणसन्तर्जनयोः** । जर्चति । चर्चति । चर्चितम् । विचर्चिका । झर्चति । जझर्च । जर्ज झर्झ इत्**येके** । जर्जति । जर्जरः । झर्झति । झर्झरः ।।१८—२०।।

१८. **त्वच संवरणे** । त्वचति । त्वचः । त्वक् ।।२१।।

१९. **ऋच स्तुतौ** । ऋचति । आनर्च । आनृचतुः । अर्चिता । अर्च्यम् । ऋक् । अर्द्धर्चः अर्द्धर्चम् । अर्चा ।।२२।।

२०. **उब्ज आर्जवे** । उब्जति । उब्जाञ्चकार । उब्जिजिषति । अभ्युद्गः । समुद्गः । न्युब्जः ।।२३।।

२१. **उज्झ उत्सर्गे** । उज्झति । औज्झीत् । उज्जिझिषति । उद्धयः । दोपधोऽयम् ।।२४।।

२२. **लुभ विमोहने** । लुभति । लुलोभ । लोभिता लोब्धा । लुभित्वा लोभित्वा । विलुभितः (६) । लुभ्यतीति तु लुभ गार्ध्ये इत्यस्य ।।२५।।

२३. **रिफ कत्थनयुद्धहिंसादानेषु** । रिफति । रिरेफ । **नोपधात् थफान्ताद्वा** (१।२।२३) इति नोपधग्रहणसामर्थ्यान्नित्यमकित्त्वमिच्छन्ति । रेफित्वा । रेफः ।।२६।।

२४. **तृफ तृन्फ तृप्तौ** । तृफति । तर्फिता । तर्फित्वा । तृम्फति । ततृम्फ । तृम्फिता । तृफित्वा तृम्फित्वा ।।२७—२८।।

२५. **तुप तुम्प तुफ तुम्फ हिंसायाम्** । तुपति । तुम्पति । तुफति । तुम्फति । तुपतुम्पग्रहणं भ्वादौ स्वरार्थम् ।।२९—३२।।

२६. **दृफ दृम्फ उत्क्लेशे** । दृफति । दृम्फति । **वामन**स्तु तृपिदृपी पान्ताविच्छति । यदुक्तं—**तुदादौ यौ तृपिदृपी तावुदात्तावेवेति** (काशिका ७।१) ।।३३,३४।।

---

(५) उत्क्लेशः पीडा ।

(६) लुभो विमोहन इति (७।२।५४) क्त्वानिष्ठयोर्नित्यमिट् ।

२७. **ऋफ ऋन्फ हिंसायाम्**। ऋफति। आनर्फ। आनृफतुः। ऋम्फति। ऋम्फाञ्चकार। ऋम्पिफिषति। ऋम्फित्वा र्ऋफित्वा ॥३५,३६॥

२८. **गुफ गुन्फ ग्रन्थे**। गुफति। गुम्फति। गुम्फः। ॥३७,३८॥

२९. **उभ उन्भ पूरणे**। उभति उवोभ। ऊभतुः। उभौ। उभयम्। उम्भति। उम्भाञ्चकार। उम्भिता। उम्भित्वा। उम्भः। कुम्भः। कुम्भी। अयस्कुम्भः ॥३९,४०॥

३०. **शुभ शुन्भ शोभार्थे**। शुभति। शुशोभ। शुशुभतुः। अशोभीत्। शौभी। शोभत इति भौवादिकस्य। शुम्भति। शुशुम्भ ॥४१, ४२॥

**वृद्** इत्यतो नुम्विधौ तृम्फादयः समाप्ता इत्यर्थः।

३१. **दृभी ग्रन्थे**। दृभति। ददर्भ। ददृभतुः। दर्भिता। दर्भः। दृब्धः ॥४३॥

३२. **चृती हिंसाग्रन्थयोः**। चृतति चचर्त्त। चर्त्तिता। चर्त्तिष्यति चर्त्स्यति। अचर्त्तीत्। चिचर्त्तिषति चिचृत्सति। चरीचृत्यते। चृत्तम्। चर्त्यम्। **यस्य विभाषा** (७।२।१५) इत्यनिट्त्वे सिद्धेऽस्येदित्त्वेन तस्यानित्यत्वज्ञापनाद् धावित इति सिद्धम्। (७)॥४४॥

३३. **विध विधाने**। विधति। विवेध। विविधतुः। वेधिता। वेधित्वा विधित्वा। वेधः। विधिः (८) ॥४५॥

३४. **जुड गतौ**। जुडति। जुजोड ॥४६॥

३५. **मृड सुखने**। मृडति। ममर्ड। ममृडतुः। मर्डिता। मृडितः। मृडित्वा। मृडः। मृडानी। मृड्नातीति क्रैयादिकस्य रूपम् ॥४७॥

३६. **पृड च**। पृडति। पपर्ड ॥४८॥

---

(७) ईदित्त्वं यङ्लुगन्तान्निष्ठायामनिट्त्वार्थम्। तेन चरीचृतः चरीचृतवानित्यन्ये।

(८) भाष्ये त्वन्यथा। तथाहि समर्थसूत्रे (२।१।१) भाष्यम्—"विधिरिति कोऽयं शब्द? विपूर्वाद धाञः कर्मसाधन इकार" इति। स्वरे भेदः। इन्प्रत्ययान्तस्य नित्त्वान् "ञ्नित्यादिर्नित्य" मिति (६।१।१९७) आद्युदात्तत्वम्। किप्रत्ययान्तस्य तु प्रत्ययस्वरेणान्तोदात्तत्वम्।

३७. **पृण प्रीणने** । पृणति । लोकम्पृणः ॥४९॥

३८. **मृण हिंसायाम्** । मृणति । मृणितम् । मृणालम् ॥५०॥

३९. **तुण कौटिल्ये** । तुणति । तुतोण ॥५१॥

४०. **पुण कर्मणि शुभे** । पुणति । निपुणः । पुण्यम् ॥५२॥

४१. **मुण प्रतिज्ञाने** । मुणति । मुणितम् ॥५३॥

४२. **कुण शब्दोपकरणयोः** । कुणति । चुकोण । कोणः । कोणित्वा कुणित्वा । कोणिका ॥५४॥

४३. **शुन गतौ** । शुनति । शुनकः ॥५५॥

४४. **द्रुण हिंसागतिकौटिल्येषु** । द्रुणति । दुद्रोण । द्रोणः । द्रोणी । द्रुणः । द्रुणी । कुद्रोणी । द्विद्रोणम् ॥५६॥

४५. **घुण घूर्ण भ्रमणे** । घुणति । जुघोण । घुणती घुणन्ती । घूर्णति । जुघूर्ण । घूर्णती घूर्णन्ती । घोणते घूर्णत इति भौवादिकयो रूपम् ॥५८॥

४६. **षुर ऐश्वर्य्यदीप्त्योः** । सुरति । सुषोर । सोरिता । सूर्य्यात् । असोरीत् । सुरः । सुरा ॥५९॥

४७. **कुर शब्दे** । कुरति । कूर्य्यते । चुकोर । कूर्य्यात् (९) अकोरीत् ॥६०॥

४८. **खुर च्छेदने खण्डने च** । खुरति । चुखोर । खोरिता । न्यखोरीत् । खुरः ॥६१॥

४९. **मुर संवेष्टने** । मुरति । मुरः । मुरारिः ॥६२॥

५०. **क्षुर विलेखने** । क्षुरति । चुक्षोर । क्षुरः ॥६३॥

५१. **घुर भीमार्थशब्दयोः** । घुरति । जुघोर । घोरः । घुर्घुरः (१०) ॥६४॥

५२. **पुर अग्रगमने** । पुरति । पुरम् । पुरी ॥६५॥

---

(९) हलि चेति (८।२।७७) दीर्घः । न भकुरछुरामिति (८।२।७९) तु न ह्रस्वः । अत्र करोतेरेव ग्रहणात् ।

(१०) कृन्नादीनां के द्वे भवत इति (६।१।१।२ वा) द्वित्वम् । पृषोदरादित्वाच्च न हलादिशेषः (७।४।६०) ।

**५३. वृहू उद्यमे ।** वृहति । वर्हिता वर्ढा । वर्हिष्यति वर्क्ष्यति । अवर्हीत् अवृक्षत् । वरीवृह्यते । विवर्हिषति विवृक्षति । वर्हितुम् वर्ढुम् । वृढः । वर्हित्वा वृढ्वा ॥६६॥

**५४. तृहू स्तृहू तृंहू हिंसार्थाः ।** तृहति । तर्हिता तर्ढा । अतर्हीत् अतृक्षत् । तरीतृह्यते । तर्हित्वा तृढ्वा । तृढः । स्तृहति । तस्तर्ह । स्तर्हिता स्तर्ढा । स्तर्हिष्यति स्तर्क्ष्यति । अस्तर्हीत् अस्तृक्षत् । तिस्तर्हिषति तिस्तृक्षति । तिष्टर्हयिषति । तरीष्टृह्यते । स्तर्हित्वा स्तृढ्वा । स्तृढः । तृंहति । ततृंह । तर्हिता तृण्ढा । तृंहिष्यति तृङ्क्ष्यति । तृह्यात् । अतृंहीत् अताङ्क्षीत् । अतृंहिष्टाम् अताण्ढाम् । तितृंहिषति तितृक्षति (११) । तरीतृह्यते । तृंहित्वा तृण्ढ्वा । तृढः । तृंहणम् ॥६७-६९॥

**५५. इषु इच्छायाम् ।** उकारस्त्विषुगमीति (७।३।७७) विशेषणार्थः (१२) । इच्छति । इयेष । ईषतुः । ईषुः । एष्टा एषिता । इच्छेत् (१३) । इष्टम् । इष्टिः । एषणः । एषणी । "**नाराचीमेषणीमाहुः**" । एषित्वा इष्ट्वा ॥७०॥

**५६. मिष स्पर्द्धायाम् ।** मिषति । मिमेष । मेषिता । निमेषः । मेषः । मिषः ॥७१॥

**५७. किल श्वैत्यक्रीडनयोः ।** किलति । चिकेल । केलिता । केलिः ॥७२॥

**५८. तिल स्नेहने ।** तिलति । तितेल । तिलः ॥७३॥

**५९. चिल वसने ।** चिलति । चिलम् । चेलम् । ब्राह्मणिचेली ।७४

**६०. चल विकसने ।** चलति । चलती चलन्ती । ज्वलादिकस्य तु चलश्चालश्चलन्तीति ।।७५।।

---

(११) हलन्ताच्चेति (१।२।१०) सनि हल्ग्रहणस्य जातिवाचित्वात् कित्त्वे नलोपः ।

(१२) मान्द्राजपुस्तके तु तीषसहलुभरुषरिष इति (७।२।४८) विशेषणार्थ इति पाठः ।

(१३) इच्छार्थेभ्यो विभाषा वर्तमान इति (३।३।१६०) वर्तमाने लिङ् लट् च ।

६१. **इल स्वप्नक्षेपणयो**। इलति। इयेल। ईलतुः। एलिता। इला ।।७६।।

६२. **बिल भेदने**। बिलति। बिलम् ।।७७।।

६३. **णिल गहने**। निलति। प्रणिलति। निनेल ।।७८।।

६४. **हिल हावकरणे**। हिलति। हिलः ।।७९।।

६५. **शिल षिल उञ्छे**। शिलति। शिशेल। शिलम्। सिलति। सिषेल। सिषेलयिषति ।।८०,८१।।

६६. **विल संवरणे**। विलति। विलम्। आविलम् ।।८२।।

६७. **मिल श्लेषणे**। इति परस्मैपदिष्विह केचित् पठन्ति। तेषां कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदं फलम्। मिलति। मिमेल। मिमेल। मेलिता। मिलितम्। मेलः (१४) ।।८३।।

६८. **लिख अक्षरविन्यासे**। लिखति। लिलेख। लेखिता। अलेखीत्। लिखित्वा लेखित्वा (१५)। हृल्लेखः। लेखनम्। लेखनी। प्रायेण लेखकः। लिखनं लिखिष्यति। लिखितव्यमिति तु संज्ञापूर्वको विधिरनित्य इति (प०, ९४) गुणाभावं मन्यन्ते ।।८४।।

---

(१४) कथं "न दृष्टेः शैथिल्यं मिलनमिति चेतो दहति मे" इत्यमरुशतके, तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितमिति रत्नावल्यां, व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरमिति गीतगोविन्दे? नहि तत्पुरुषाश्रयेण मिल श्लेषणे लिख अक्षरविन्यास इति कुटादी। अपाच्चतुष्पाच्छकुनिष्वालेखन इति (६।१।१४२) निर्देशात्। अन्ये तु मिलनशब्दस्थाने भावे क्तान्तं मिलितशब्दं पठन्ति यथा केचिद् विश्रामशब्दस्थाने विश्रान्तिशब्दं पठन्ति।

(१५) अत्रेदं केषाञ्चित् समाधानम्। गाङ्कुटादिभ्य इत्यत्र (१।२।१) कुटस्यादिः कुट आदिर्येषामित्येकशेषवृत्त्या बहुव्रीहितत्पुरुषयोर्द्वयोरप्याश्रयणाल् "लिखितुं विश्वसृजोऽपि शक्तिहानि"रिति "स्वयमेव लिखिष्यत" इति सिद्धं भवतीति। अन्येतु लेखित्वा लिखित्वा लिलेखिषति लिलेखितुमित्यादि वृत्तिकार (१।२।२६।३।४।१३) प्रयोगदर्शनादालेखन इति (६।१।१४२) निर्देशाच्च तत्पुरुषाश्रयणपक्ष दुष्ट एवेति मन्यमानाः संज्ञापूर्वको विधिरनित्य इति (प० ९४) परिभाषया केवलं लिखितुं लिखिष्यत इत्यभियुक्तप्रयोगद्वयं कथञ्चित् समर्थयन्ते। मिलिलिख्योस्तु कुटादिषु नान्तर्भाव एवेति व्यवस्थापयन्ति च।

६९. **कुट कौटिल्ये** । कुटति । चुकोट । कुटिता । अकुटीत् । चुकुटिषति । कोटचम् । कुटित्वा ।।८५।।

७०. **पुट संश्लेषणे** । पुटति । पुपोट । पुटिता । पुटित्वा । पुटम् ।।८६।।

७१. **कुच संङ्कोचे** । कुचति । कुचिता । संकोचः ।।८७।।

७२. **गुज शब्दे** । गुजति । गुजिता । अगुजीत् । गोजयति । गुजः । गोजः ।।८८।।

७३. **गुड रक्षायाम्** । गुडति । गुडिता । गुडः । गुडितः ।।८९।।

७४. **डिप क्षेपे** । डिपति । डिपिता । डेप्यम् । डिप्यतीति दिवादिपाठात् ।।९०।।

७५. **छुर च्छेदने** । छुरति । छुर्य्यात् । छुरणम् । छुरितम्। छुरिका ।।९१।।

७६. **स्फुट विकसने** । स्फुटति । पुस्फोट । स्फुटिता । अस्फुटीत् । भ्वादिषु पाठात् स्फोटति । अस्फुटत् अस्फोटीत् । स्फोटत इति ।९२।

७७. **मुट आक्षेपप्रमर्द्दनयोः** । मुटति । मुटिता । मोटकः । गणान्तरे मोटति । मोटयति ।।९३।।

७८. **त्रट च्छेदने** । त्रुटति त्रुटचति । तुत्रोट । त्रुटिता ।।९४।।

७९. **तुट कलहकर्मणि** । तुटति । तुटिता । तुटः ।।९५।।

८०. **चुट छुट च्छेदने** । चुटति । चुटिता । छुटति । छुटिता ।।९६, ९७।।

८१. **जुड बन्धने** । जुडति । जुडिता । जोडितेति गत्यर्थस्य ।।९८।।

८२. **कड मदे** । कडति । कडङ्गरः (१६) । काडः । कडेः कुटादिकार्य्यभावादन्यत्रापि पाठे न दोषः । एवं कुटादिपाठवलादकडीदित्य-

---

(१६) मतान्तरे कडङ्करशब्दोऽयम् । तथा च हरदत्तः—"कड मदे । कडतीति कडः। कडं करोतीत्यत एव निपातनात् खच् । कडङ्करो माषमुद्गादिकाष्ठमुच्यत" इति । 'कडङ्गरो वुसं क्लीव' इत्यमरः । कडङ्गरदक्षिणाच्छ च (५।१।६९) इति छप्रत्यये कडङ्गरमर्हति कडङ्गरीयो वृषः । नीवारपाकादिकडङ्गरीयैरिति रघुकाव्ये ।

त्रापि अतो हलादेर्लघोः (७।२।७) इत्यनिग्लक्षणाया वृद्धेरप्यभाव इति केचित् । अपरे तु टवर्गान्तानुरोधेनेह निर्दिश्यत इति ब्रुवते । भ्वादिष्वस्य पाठस्तु स्वरभेदार्थः (१७) ॥९९॥

८३. **लुठ संश्लेषणे** । लुठति । लुठिता । अलुठीत् ॥१००॥

८४. **लुड इत्येके** । लुडति । लुडिता ॥१०१॥

८५. **हुड सहने** । हुडति । हुडिता (१८) ॥१०२॥

७६. **कुड बाल्ये** । कुडति । कुडिता । कोडचम् । कोडः ॥१०३॥

८७. **पुड उत्सर्गे** । पुडति । पुडिता ॥१०४॥

८८. **घुट प्रतिघाते** । घुटति । घुटिता । घोटकः ॥१०५॥

८९. **तुड तोडने** । तुडति । तुडिता ॥१०६॥

९०. **थुड ष्ठुड संवरणे** । थुडति । थुडिता । स्थुडति । स्थुडिता ॥१०७,१०८॥

९१. **खुड छुड इत्येके** । खुडति । खुडिता । "**खोडः खञ्जे त्रिषु स्मृतः ।**" छुडति । छुडिता ॥१०९,११०॥

९२. **हुड संघाते** । हुडति । हुडिता ॥१११॥

९३. **ब्रुड भ्रुड इत्येके** । ब्रुडति । ब्रुडिता । भ्रुडति । भ्रुडिता ॥११२,११३॥

९४. **स्फुर स्फुरणे सञ्चलने दीप्तौ च** । स्फुरति । स्फुरिता । निष्फुरति निस्फुरति । स्फोरयति स्फारयति । अपुस्फुरत् । पुस्फोरयिषति पुस्फारयिषति ॥११४॥

९५. **स्फर इत्येके** । अदुपधः । स्फरति । पस्फार ॥११५॥

९६. **स्फुड बुड संवरणे** । स्फुडति । स्फुडिता । बुडति (१९) ॥११६,११७॥

---

(१७) उञ्छतिवत् । उछि उञ्छे इत्यत्र टीका द्रष्टव्या (पृष्ठ ११०, टि० ४) । (१८) माधवभट्टोजिभ्यामयं न दत्तः ।

(१९) "मैत्रेयेणैते न पठयन्ते ।" इति माधवः। अस्मत्संगृहीतगघङपुस्तकेषु तु ते सन्ति । [माधवस्तु 'स्फुड चुड ब्रुड संवरणे' इत्युक्त्वा 'मैत्रेयेणैते न पठयन्ते' इत्याह । अत्र धातुप्रदीपे 'चुड' न पठयते । टिप्पण्यां सर्वत्र बहुवचनेन

**९७. क्रुड निमज्जने** । क्रुडति । क्रोडः । क्रोडा ॥११८॥

**९८. भृड इत्यप्येके** । भृडति । बभर्ड । भृडिता ॥११९॥

**९९. ध्रुड इत्यपरे** । ध्रुडति ॥१२०॥

**१००. स्फुल सञ्चलने** । स्फुलति । पुस्फोल । स्फुलिता । निष्ष्फुलति निःस्फुलति ॥१२१॥

**इति परस्मैभाषा उदात्ताः ।**

**१०१. गुरी उद्यमे** । गुरते । जुगुरे । गुरिता । उद्गूर्णः उद्गूर्णवान् ॥१२२॥

**इति आत्मनेभाषः । अयमनुदात्तेत् ।**

**१०२. णू स्तवने** । नुवति । प्रणुविता । न्यनुवीत् । नूत्वा । नूतः ॥१२३॥

**१०३. धू विधूनने** । धुवति । धुविता । धुवित्रम् । **केचिदत्र** गुणमिच्छन्ति—धवित्रम् । धूतम् ॥१२४॥

**१०४. गु पुरीषोत्सर्गे** । गुवति । जुगाव । जुगुवतुः । गुता । गुष्यति । अगुषीत् । अगुताम् । अगुतम् । गूनः गूनवान्✡ ॥१२५॥

**१०५ ध्रु गतिस्थैर्य्ययोः** । ध्रुवति । ध्रुविता । अध्रुवीत् । ध्रुवः ॥१२६॥

**इति कुटादिष्वजन्ता एते परस्मैपदिनः ।**

**१०६. कुङ् शब्दे** । कुवते । कुता । अकुत । चोकूयते । कूङिति दीर्घान्तोऽयमित्येके इच्छन्ति । कुवते । कुविता । आकूतम् । विकूतमिति ॥१२७॥

**वृत्** इति कुटादिपरिसमाप्तेः ।

**१०७. पृङ् व्यायामे** । व्याप्रियते । व्यापप्रे । व्यापर्त्ता । व्यापरिष्यते । व्यापुपूर्षते । व्यापारयति । व्यापीपरत् । व्यापृत्य । व्यापृतः । व्यापारः । संपारः ॥१२८॥

**१०८. मृङ् प्राणत्यागे** । म्रियते । ममार । मर्त्ता । मरिष्यति ।

---

निर्देशः क्रियते सम्पादकेन । 'चुड्' धातोरिहापाठे किं कारणमिति न प्रतीमः । यु० मी०]

✡ दुग्वोर्दीर्घश्च (८।२।४४ वा०) । यु० मी०

अम्रियत । मृषीष्ट । अमृत । मुमूर्षति । मरीम्रीयते । मारयति । अमीमरत् । मृत्वा । मृतः । मृत्युः । मरः । अमरः ॥१२९॥

**इति आत्मनेभाषौ** । अजन्ताविमावात्मनेपदिनौ ।

**१०९. रि पि गतौ** । रियति । रिराय । रिय्यतुः। रेता । रीयात् । अरेषीत् । रिरीषति । रेरीयते । पियति । पिपाय । पेता ।१३०,१३१

**११०. धि विधारणे** । धियति । दिधाय । दिध्यतुः । धेता ।१३२।

**१११. क्षि निवासगत्योः** । क्षियति । चिक्षाय । क्षयः । प्रक्षीय । क्षीणं क्षितम् । क्षयी ॥१३३॥

**११२. षू प्रेरणे** । सुवति । अभिषुवति । सविता । सूर्य्यः । सूतः ॥१३४॥

**११३. कॄ विक्षेपे** । किरति । अवकिरते हस्ती स्वयमेव (२०) । अपस्किरते वृषभः । चकार । चकरतुः । चकरुः । करिता करीता । अकारीत् । चिकरिषति (२१) । चेकीर्य्यते । विकिरः विष्किरः । उत्कारो धान्यानाम् । उत्करो रजसाम् । कीर्णः । कीर्णिः ॥१३५॥

**११४. गॄ निगरणे** । गिरति गिलति । अवगिरते । संगिरते । विजिगरिषति । निजेगिल्यते । उद्गीर्णम् । उद्गारः । तिमिङ्गिलः । गरः । गलः ॥१३६॥

**इति परस्मैभाषाः** । परस्मैपदिन इत्यर्थः । **षूप्रभृतय उदात्ताः** ।

**११५. दृङ् आदरे** । आद्रियते । आदर्त्ता । आदिदरिषते । देद्रीयते । आदृत्यः । आदरी । आदृतः ॥१३७॥

**११६. धृङ् अवस्थाने** । ध्रियते (२२) । दध्रे । धर्त्ता । दिध-

---

(२०) भूषाकर्मकिरादिसनाञ्चान्यत्रात्मनेपदादिति (३।१।८७, वा) कर्मकर्तरि यक्चिणोर्निषेधः । अवाकीर्ष्ट अवाकरिष्ट अवाकरीष्ट वा हस्ती स्वयमेव । स्वदेहं पांश्वादिनावकिरति स्म आवृणोति स्मेत्यर्थः ।

(२१) किरश्च पञ्चभ्य (७।२।७५) इति सनि नित्यमिट् । नात्र वृतो वेति (७।२।३८) प्रवर्तते वामनहरदत्तमते । भागवृत्तिकारस्त्वत्रापि दीर्घविकल्पमाह । मान्द्राजपुस्तके चिकरीषतीति दीर्घोदाहरणमपि दत्तम् । ङपुस्तके तु केवलह्रस्वोदाहरणमेव ।

(२२) "ध्रियते स्वेदलवोद्गमोऽपि ते" इति रघुकाव्ये । "ध्रियते कुसुमप्रसाधनम्" इति कुमारे ।

रिषते । धर्मः । आधारः । **इति आत्मनेभाषौ** । किरादिकार्य्यानुरोधेन पृङ्मृङोरनन्तरं नोपदिष्टौ एतौ ।

११७. **प्रच्छ ज्ञीप्सायाम्** । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः। प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । अप्राष्टाम् । पिपृच्छिषति । परीपृच्छ्यते । पृष्ट्वा । पृष्टः । प्रश्नः । पृच्छा । शब्दप्राट् । शब्दप्राशौ । शब्दप्राशः । इति पञ्च चैते किरादयः ।।१३९।।

**वृद्** इति किरादिपरिसमाप्तेः (२३) ।

११८. **सृज विसर्गे** । सृजति । ससर्ज्ज । ससृजतुः । स्रष्टा । स्रक्ष्यति । अस्राक्षीत् । सिसृक्षति । सरीसृज्यते । सृज्यते श्रद्धया मालां धार्मिकः (२४) । असर्जि मालां श्रद्धया धार्मिकः । सर्गः । सृष्टिः । स्रक् । स्रजौ । स्रग्वी ।।१४०।।

११९. **टुमस्जो शुद्धौ** । मज्जति । ममज्ज । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् । मिमङ्क्षति । मामज्ज्यते । मग्नः । मज्जनम् । साधुमक् । मज्जथुः । मङ्क्त्वा मक्त्वा । मद्गुः । मद्गुरः ।।१४१।।

१२०. **रुजो भङ्गे** । रुजति । रोक्ता । रुग्णः । रुक् । रुजा । रोगः। रुक्त्वा । कूलमुद्रुजः ।।१४२।।

१२१. **भुजो कौटिल्ये** । भुजति । भोक्ता । बुभुक्षति । बोभुज्यते । भुक्त्वा । भुग्नः ।।१४३।।

१२२. **छुप स्पर्शे** । छुपति । चुच्छोप । छोप्ता । छोप्स्यति । अच्छौप्सीत् । चुच्छुप्सति । चोच्छुप्यते । छुप्त्वा । छुप्तः ।।१४४।।

१२३. **रुश रिश हिंसायाम्** । रुशति । रोष्टा । रिशति । रेष्टा ।।१४५,१४६।।

---

(२३) एवं चिकरिषतीति । जिगरिषति जिगलिषति । दिदरिषते दिधरिषते पिपृच्छिषतीत्युदाहरणानि । उद्दिधीर्षुरिति तु भौवादिकयोर्धृङ्धृञो रूपम् । किरश्च पञ्चभ्यः (७।२।७५) इति किरादिफलं सनि नित्यमिट् ।

(२४) अत्र मृजेः श्रद्धोपपन्ने कर्तर्य्येवेति भाष्यात् (३।१।८७) कर्मकर्तरि तङ् । "मृजियुज्योः श्यंस्तु" (३।१।८७, वा) इति श्यन् । न तु यक् । श्रद्धया निष्पादयतीत्यर्थः ।

१२४. **लिश गतौ** । लिशति । लिलेश । प्रलेष्टा । अलिक्षत् । लेशः ॥१४७॥

१२५. **स्पृश संस्पर्शे** । स्पृशति । पस्पर्श । स्प्रष्टा स्पर्ष्टा । स्प्रक्ष्यति स्पर्क्ष्यति । अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् । अस्प्राष्टाम् अस्पार्ष्टाम् अस्पृक्षताम् । पिस्पृक्षति । परीस्पृश्यते । स्पृष्ट्वा । स्पृष्टः । स्पर्शः । मन्त्रस्पृक् । उदकस्पर्शः ॥१४८॥

**इति परस्मैभाषा अनुदात्ताः** । एते प्रच्छप्रभृतयः ।

१२६. **विछ गतौ** । विच्छायति । विच्छेस्तुदादिपाठसामर्थ्यादाय-प्रत्ययान्तादपि शो (२५) भवति । यथा जुगुप्सत इत्यत्रात्मनेपदम्, एकदेशपाठात् । **अन्ये** तु अत्र पाठसामर्थ्येन सार्वधातुकेऽप्यायप्रत्ययस्य विकल्पविधानमाचक्षते । तथा च **च्छ्वोः शूडनुनासिके च** (६।४।१९) इत्यत्र गां विच्छतीति गोविडिति **न्यासे** दृश्यते । एवञ्च विच्छति विच्छायति । विविच्छ विच्छायाञ्चकार । विच्छिता विच्छायिता । विच्छायन्ती विच्छायती । विच्छयति । विच्छाययति । अविविच्छत् अविविच्छायत् । विच्छित्वा विच्छायित्वा । विच्छितः विच्छायितः । विश्नः ॥१४९॥

**इति परस्मैभाष उदात्तः** ।

१२७. **विश प्रवेशने** । विशति । निविशते । वेष्टा । अविक्षत् । विष्टम् । वेशः । वेशनम् ॥१५०॥

१२८. **मृश आमर्शने** । मृशति । म्रष्टा मर्ष्टा । म्रक्ष्यति मर्क्ष्यति । अम्राक्षीत् अमार्क्षीत् अमृक्षत् । अम्राष्टाम् अमार्ष्टाम् अमृक्षताम् ।१५१

१२९. **नुद प्रेरणे** । नुदति । नुनोद । नोत्ता ॥१५२॥

१३०. **षद्लृ विशरणे** । सीदति । ससाद । सत्ता । असदत् । सिषत्सति । सीदती सीदन्ती । सादः सद इति ज्वलादिपाठात् (२६) ॥१५३॥

---

(२५) तुदादिभ्यः शः (३।१।७७) इत्यनेन शप्रत्यय इत्यर्थः ।

(२६) अत्र पाठे प्रयोजनं सीदती सीदन्तीति नुम्विकल्पः । भ्वादौ पाठः ज्वलादित्वात सादः सद इति वा णप्रत्यार्थः, स्वरभेदार्थश्च । भ्वादौ सीदतीत्यस्य शप्तिपोरनुदात्तत्वाद् धातोः (६।१।१६२) इत्याद्युदात्तत्वम् । तुदादौ तु प्रत्ययस्वरेण मध्योदात्तत्वम् ।

१३१. **शद्लृ शातने**। शीयते। शशाद। शत्ता। शत्स्यति। शिशत्सति। भ्वादिष्वयं पठितः, स्वरार्थं पुनरत्र पठ्यते (२७) ।१५४

**इति परस्मैभाषा अनुदात्ताः**। एते विशिप्रभृतयः। हलन्ता अप्येतेऽनिट्प्रकरणे पुनः परस्मैपदिन उक्ताः।

१३२ **मिल सङ्गमे**। मिलति मिलते। न्यमेलीत् न्यमेलिष्ट (28)। **अयमुदात्तः** ॥१५५॥

१३३. **मुच्लृ मोक्षणे**। मुञ्चति मुञ्चते। मुमोच मुमुचे। मुमुचतुः मुमुचाते। मोक्ता। मोक्ष्यति मोक्ष्यते। अमुचत् अमुक्त। मुमुक्षते मुमुक्षति। मोक्षते वत्सः स्वयमेव। मुक्तम्। मुक्तिः। निर्मोकः। नखमुचं धनुः। मुक्। मुक्ता। मौक्तिकम्। मोक्षः ॥१५६॥

१३४. **लुप्लृ छेदने**। लुम्पति लुम्पते। लुलोप लुलुपे। लोप्ता। लोप्स्यति लोप्स्यते। अलुपत् अलुप्त। लोलुप्यते। लोपः ॥१५७॥

१३५. **विद्लृ लाभे**। विन्दति विन्दते। वेत्ता। वेत्स्यति। मतान्तरे वेदिता। वेदिष्यति। अविदत् अवित्त। विन्नम्। **कलापतन्त्रे**ऽप्यस्यानिट्त्वमिष्यते। वेत्ता। विन्नः। वित्तम् (२९) ॥१५८॥

१३६. **लिप उपदाहे**✲। लिम्पति लिम्पते। लिलेप लिलिपे। लेप्ता। अलिपत् अलिपत अलिप्त। लेप्यम्। लिम्पः। विलेपिका ॥१५९॥

१३७. **षिच क्षरणे**। सिञ्चति सिञ्चते। निषिञ्चति। सिषेच सिषिचे। सेक्ता। सेक्ष्यति सेक्ष्यते। न्यषिञ्चत्। असिचत् असिचत असिक्त। सिसिक्षति सिसिक्षते। निषिषिक्षति। सेसिच्यते। निसेसिच्यते। अभिषेकः ॥१६०॥

**इति उभयतोभाषाः। स्वरितेतः मिलप्रभृतयः। अनुदात्ताः मुच्लृप्रभृतयः।**

---

(२७) शदेः शित इति (१।३।६०) तङ्विधानादत्र नुम्विकल्पप्रयोजनं नास्ति। स्वरभेदस्तु प्रयोजनम्। तत्र पूर्ववत् तुदादौ अस्य मध्योदात्तत्वम्।

(२८) पुनः पाठः कर्त्रभिप्राये तङर्थः।

(२९) व्याघ्रभूतिमतेऽयं सेट्। भाष्यमते त्वनिट्।

✲ 'उपदेहे' इति पाठेन भाव्यम्। उपदेहो वृद्धिः। यु० मी०

१३८. **कृती छेदने** । कृन्तति । चकर्त । कर्त्तिता । कर्त्स्यति कर्त्तिष्यति, कृत्सीष्ट कर्त्तिषीष्ट (३०)। अकर्त्तीत् । चरीकृत्यते । कर्त्तयति । अचीकृतत् अचकर्त्तत् । कृत्तिः । कृत्तम् । कृत्तवान् । विकर्त्तनः (३१) ॥१३१॥

१३९. **खिद परीघाते** । खिन्दति । चिखेद । खेत्ता । खेत्स्यति । अखैत्सीत् । अखित्ताम् । चिखित्सति । चेखिद्यते । खित्त्वा । खिन्नः । खिद्यते खिन्ते इति गणान्तरपाठात् ॥१६२॥

१४०. **पिश अवयवे** । पिंशति । पिपेश । पेशिता । पिशितम् । पेशी ॥१६३॥

**इति परस्मैभाषाः** । एते कृतिप्रभृतयः परस्मैपदिनः । उदात्ताश्च खिदिवर्जम् ।

**वृद्** इति । मुचादेस्तुदादेश्च परिसमाप्तेः । मुचादयस्तुदादयश्च वृत्ताः समाप्ता इत्यर्थः ।

**इति महामहोपाध्याय (३२) श्रीमैत्रेयरक्षितकृतौ**
**धातुप्रदीपे तुदादीनां वृत्तिः ॥६॥**

---

(३०) कर्म्मण्ययं प्रयोगः । तत्र सेऽसिचि कृतचृतच्छृदतृदनृत (७।२।५७) इति वेट्त्वम् । लिङ्सिचावात्मनेपदेषु (१।२।११) इति झलादिलिङः कित्त्वम् । तेन कृत्सीष्ट, पक्षे कर्त्तिषीष्टेति ।

(३१) कथं "विरहिनिकृन्तनकुन्तमुखाकृतिकेतकीदन्तुरिताश" इति जयदेवः ? उणादिषु द्रष्टव्यः । ल्युटि तु निकर्त्तन एव ।

(३२) च पुस्तके वैयाकरणगजपञ्चानन इत्यत्राधिकः पाठः ।

# अथ रुधादय उच्यन्ते

१. **रुधिर् आवरणे**। रुणद्धि। नित्यत्वाद् विकरणेन गुणो बाध्यते। रुन्धे। रुरोध रुरुधे। रोद्धा। रोत्स्यति रोत्स्यते। अरुधत् अरौत्सीत् अरुद्ध। समरुद्ध विक्रमः स्वयमेव ॥१॥

२. **भिदिर् विदारणे**। भिनत्ति भिन्ते। अभिदत् अभैत्सीत् अभित्त। भिदा। भेदः। भित्तिः ॥२॥

३. **छिदिर् द्वैधीकरणे**। छिनत्ति छिन्ते। चिच्छेद चिच्छिदे। अच्छिदत् अच्छैत्सीत् अच्छित्त। दधि चिच्छित्सति। रज्जुच्छित् ॥३॥

४. **रिचिर् विरेचने**। रिणक्ति। रिङ्क्ते। अरिचत् अरैक्षीत् अरिक्त। रिरिक्षति रिरिक्षते। रेरिच्यते। विरेकः। रिक्थं द्रव्यम् ।४

५. **विचिर् पृथग्भावे**। विनक्ति विङ्क्ते। अविचत् अवैक्षीत् अविक्त। विविक्तः। विवेकः पृथगात्मता। विवेकी ॥५॥

६. **क्षुदिर् सम्पेषणे**। क्षुणत्ति क्षुन्ते। अक्षुदत् अक्षौत्सीत् अक्षुत्त। क्षुण्णम्। क्षुद्रः ॥६॥

७. **युजिर् योगे**। युनक्ति युङ्क्ते। प्रयुङ्क्ते। नियुङ्क्ते। संयुनक्ति। अयुजत् अयौक्षीत् अयुक्त। युङ्, युञ्जौ। योगः। अश्वयुक्। युग्यम्। युगम् (१)। युज्यत इति युज समाधाविति दैवादिकस्य ॥७॥

८. **उच्छृदिर् दीप्तिदेवनयोः**। छृणत्ति छृन्ते। चच्छर्द चच्छृदे। छर्दिता। छर्दिष्यति छर्त्स्यति छर्दिष्यते छर्त्स्यते। छृद्यात् छर्दिषीष्ट छृत्सीष्ट। अच्छृदत् अच्छर्दीत् अच्छर्दिष्ट। चिच्छर्दिषति। चिच्छृत्सति। चरीच्छृद्यते। छर्दित्वा छृत्त्वा। छृण्णम्। छर्दिः ॥८॥

९. **उतृदिर् हिंसानादरयोः**। तृणत्ति तृन्ते। ततर्द ततृदे। तर्दिता। तर्दिष्यति तर्त्स्यति तर्दिष्यते तर्त्स्यते। तृद्यात् तर्दिषीष्ट।

---

(१) प्रजासु वृत्तिं यमयुङ्क्त वेदितुमिति स्वरितेत्त्वात् लङि तङ्।

तृत्सीष्ट । अतृदत् अतर्दीत् अतर्दिष्ट । तितर्दिषति तितृत्सति । तरीतृद्यते । तर्दित्वा तृत्त्वा । तृण्णम् । तृण्णवान् ॥९॥

**इति उभयतोभाषाः स्वरितेतः ।** छदितृदिवर्जमनुदात्ताः ।

**१०. कृती वेष्टने ।** कृणत्ति । कर्त्तिता । कर्त्तिष्यति कर्त्स्यति । अकर्त्तीत् । चिकर्त्तिषति चिकृत्सति । चरीकृत्यते । कृत्तम् ॥१०॥

**इति परस्मैभाष उदात्तः ।** ऋदुपधतकारान्तानुरोधेन पृथगयं परस्मैपदी निर्दिश्यते ।

**११. ञिइन्धि दीप्तौ ।** इन्धे । इन्धाते । इन्धते । इन्धाञ्चक्रे । इन्धिता । इन्दिधिषते । इद्धमस्य । इन्धित्वा । समित् । इन्धानः ॥११॥

**१२. खिद दैन्ये ।** खिन्ते । खिन्दाते । खेत्ता । अखित्त । खिन्दानः । खिद्यत इति दैवादिकस्य । खिन्दतीति खिद परिघात इत्यस्य ॥१२॥

**१३. विद विचारणे ।** विन्ते । विन्दाते । वेत्ता । विन्नम् । वित्तम् ॥१३॥

**इति आत्मनेभाषा अनुदात्तेतः ।** इन्धिवर्जमनुदात्तौ ।

**१४. शिष्लृ विशरणे ।** विशिनष्टि । शेष्टा । शेक्ष्यति । शिनष्टु । शिण्ढि । शिनषाणि । अशिनट् । अशिषत् । तङि व्यत्यशिक्षत । शिशिक्षति । शिष्टः । विशेषः । विशिष्यते । चौरादिकस्य तु विशेष्यत इति ॥१४॥

**१५. पिष्लृ सञ्चूर्णने ।** पिनष्टि । चौरस्य पिनष्टि । धानाः पिनष्टि । पिष्टः । पेष्टा । पिनष्टु । पिण्ढि । अपिनट् । अपिषत् । व्यत्यपिक्षत । पिपिक्षति । चूर्णपेषं पिनष्टि । उदपेषं पिष्टम् ॥१५॥

**१६. भञ्जो आमर्दने ।** भनक्ति । बभञ्ज । भङ्क्ता । भङ्क्ष्यति । अभनक् । अभाङ्क्षीत् । अभाजि अभञ्जि । बिभङ्क्षति । बम्भज्यते । भक्त्वा भङ्क्त्वा । भङ्गुरम् । भग्नः । भङ्गः । भङ्ग्यम् । भङ्गा कुसुम्भम् । भाङ्गीनम् । भङ्गाकटम् ॥१६॥

**१७. भुज पालनाभ्यवहारयोः ।** भुनक्ति पृथिवीम् । अन्नं भुङ्क्ते । सुखमनुभुङ्क्ते । भोक्ता । भोक्ष्यति भोक्ष्यते । भुनजानि भुनजै ।

भुनजाव भुनजावहै। भुनजाम भुनजामहै। अभुनक् अभुङ्क्त। अभौक्षीत् अभुक्त। बुभुक्षति बुभुक्षते। बोभुज्यते। भोज्यम्। भोग्या लक्ष्मीः। भुक्त्वा। भुक्तम्। भोगः ॥१७॥

**इति अनुदात्ताः**। एत शिषिप्रभृतयः।

१८. **तृह हिसि हिंसायाम्**। तृणेढि। तृण्ढः। ततर्ह। तर्हिता। तृणेढु। तृण्ढि। तृणहानि। अतृणट्। अतर्हीत्। हिनस्ति। जिहिंस। हिंसिता। हिनस्तु। हिन्धि। हिनसानि। अहिनत्। अहिनस्त्वम् अहिनत् त्वम्। अहिनसम्। अहिंसीत्। जिहिंसिषति। जेहिंस्यते। हिंसकः। हिंस्रः। हिंसा ॥१८,१९॥

१९. **उन्दी क्लेदने**। उनत्ति। उन्दाञ्चकार। औन्दीत्। उन्दिदिषति। समुन्नं समुत्तम्। समुद्रः ॥२०॥

**इति उदात्ताः**। तृहिप्रभृतयः।

२०. **अन्जू व्यक्तिम्रक्षणकान्तिगतिषु**। अनक्ति। अङ्क्तः। अञ्जन्ति। आनञ्ज। अङ्क्ता अञ्जिता। अञ्जिष्यति अङ्क्ष्यति। आनक्। आञ्जीत्। अञ्जिजिषति। अञ्जयति। आञ्जिजत्। अञ्जित्वा अङ्क्त्वा अक्त्वा। अक्तः। अक्तवान्। आज्यम्। व्यञ्जनम्। व्यक्तिः। व्यङ्ग्यम्। अङ्गम्। अञ्जिका ॥२१॥

२१. **तन्चू संकोचने**। तनक्ति। ततञ्च। तञ्चिता तङ्क्ता। तञ्चिष्यति तङ्क्ष्यति। अतनक् अतङ्क्त। अताङ्क्षीत् अतञ्चीत्। तितञ्चिषति। तितङ्क्षति। तातच्यते। तञ्चित्वा तक्त्वा। तक्तः। तक्तवान्। आतङ्कः। तक्रम् ॥२२॥

२२. **ओविजी भयचलनयोः**। विनक्ति। विङ्क्तः। विञ्जन्ति। विवेज। विजिता। विजिष्यति। अविजीत्। विविजिषति। विजित्वा। उद्विग्नम्। उद्विजितमिति पूर्वकस्य रूपम् (२)॥२३॥

---

(२) वस्तुतस्तु उद्विजितमिति उद्विपूर्वाज्जयतेः क्तः। जौहोत्यादिकस्य विजिर् पृथग्भावे इत्यस्यानिट्त्वात्। ओविजी भयचलनयोरिति तौदादिकस्य रौधादिकस्य च श्वीदितो निष्ठायाम् (७।२।१४) इत्यनेन निष्ठायामनिट्त्वात्। [काशिकायां तु 'विज इट' (१।२।२) सूत्रे 'ओविजीभयंचलनयो' इत्यस्यैव उद्विजिता उद्विजितुम् इत्यादीन्युदाहरणानि निर्दिष्टानि। यु० मी०]

**२३. वृजी वर्जने** । वृणक्ति । ववर्ज ववृजतुः । र्वजिता । र्वजिष्यति । अवृणक् । र्वजित्वा । वृक्तम् ॥२४॥

**२४. पृची सम्पर्के** । पृणक्ति । पपर्च । र्पचिता । अपृणक् । सम्पृक्तम् । मधुपर्कः । मधुपर्कमर्हति मधुपर्क्यः । पृक्त इत्यदादिपाठात्, वृक्त इति च ॥२५॥

**इति परस्मैभाषा उदात्तेतः** । वृजिप्रभृतय उदात्ताः ।

**वृद्** इति रुधादिगणपरिसमाप्तेः । **धातुपारायणे** तु गणसमाप्तिर्नेष्यते । तेन लुनति पुनति, लुनती पुनतीति सिध्यति ।

**इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ**
**धातुप्रदीपे रुधादीनां वृत्तिः ॥७॥**

———

# अथ तनादय उच्यन्ते

१. **तनु विस्तारे**। तनोति तनुते। तायते तन्यते। ततान तेने। तनिता। तनोतु तनुताम्। तनु तनुष्व। तनवानि तनवै। व्यतानीत् व्यतनीत् व्यतनिष्ट व्यतत। तितनिषति तितांसति तितंसति तितनिषते तितांसते तितंसते। तंतन्यते। तन्वन् तन्वानः। तनित्वा तत्वा। ततम्। सततं सन्ततम्। सातत्यम्। वितत्य। ततिः। तन्तिः। परीतत्। वितानः। प्रतानः। तितउः ॥१॥

२. **षणु दाने**। सनोति सनुते। सायते सन्यते। सनिष्यति सनिष्यते। सायात् सन्यात्। असनीत् असानीत् असनिष्ट असात। असनीः असानीः असनिष्ठाः असाथाः। सिषासति सिषासते सिसनिषति सिसनिषते। सासायते संसन्यते। सनित्वा सात्वा। सातम्। सातिः सतिः सन्ति ॥२॥

३. **क्षणु हिंसायाम्**। क्षणोति क्षणुते। चक्षाण चक्षणे। क्षणिता। अक्षणीत् अक्षत अक्षणिष्ट। चिक्षणिषति। चङ्क्षण्यते। क्षाणयति। अचिक्षणत्। क्षत्वा क्षणित्वा। क्षतम्। क्षतिः। अस्योपदेशे दन्त्यनकार इति **धातुपारायणे** व्याख्यातम्। तेन यङ्लुकि चङ्क्षन्ति। चङ्क्षान्तः ॥३॥

४. **क्षिणु च**। हिंसायामित्यपेक्षते। क्षिणोति क्षिणुते। संज्ञापूर्वको विधिरनित्य इति विकरणापेक्षः लघूपधगुणो न भवति (१)। चिक्षेण चिक्षिणे। क्षेणिष्यति क्षेणिष्यते। अक्षेणीत् अक्षेणिष्ट अक्षित। चिक्षिणिषति [चिक्षिणिषते]। क्षेणयति। चेक्षिण्यते। चेक्षेन्ति (२)। क्षितः। क्षितिः। क्षिणित्वा क्षेणित्वा क्षित्वा ॥४॥

५. **ऋणु दीप्तौ गमने च**। अर्णोति अर्णुते। आनर्ण आनृणे। आनृणतुः आनृणाते। अर्णिष्यति अर्णिष्यते। अर्णोतु अर्णुताम्।

---

(१) मतान्तरे गुण इति परस्मिन् [ऋणु] धातावुक्तम्।

(२) अयमप्युपदेशे तवर्गीयान्तः। अस्य णत्वन्तु लाक्षणिकम्।

अर्णुहि अर्णुष्व । आर्णीत् आर्णिष्ट आर्त्त । णत्वस्यासिद्धत्वादकृतणत्वस्य द्विर्वचनं **धातुपारायणे** दर्शितम् । अर्णिनिषति अर्णिनिषते । अर्णयति । आर्णिनत् । अर्णित्वा ऋत्वा । ऋतम् । ऋतवान् । स्वर्णं सुवर्णम् (३) । सर्वत्र विकरणापेक्षो गुणः । **अन्ये** तु संज्ञापूर्वकविधेरनित्यत्वाद् गुणाभावं मन्यमाना ऋणोति ऋणुत इत्यादि रूपमाहुः । एवं मतान्तरेणैव क्षेणोति क्षेणुत इत्यादि ॥५॥

६. **तृण अदने** । तर्णोति तर्णुते । मतान्तरे—तृणोति तृणुते । ततर्ण ततृणे । तर्णिष्यति तर्णिष्यते । तरीतृण्यते । **केचिदस्योपदेशं** मूर्धन्यान्तमाहुः । तन्मते । तरीतृण्ढि । **अन्येषां** तरीतृन्ति । तरीतृणीति । तर्णित्वा तृत्वा । तृतः । तृणम् । कत्तृणम् (४) ॥६॥

७. **घृणु दीप्तौ** । घृणोति घृणुते घर्णोति घर्णुते । जघर्ण जघृणे । घर्णिष्यति घर्णिष्यते । घर्णोतु घृणोतु घृणुताम् घर्णुताम् । घृणु घर्णुहि घृणुष्व घर्णुष्व । जरीघृण्यते ॥७॥

**इति विभाषिताः** । एते तनादयः स्वरितेतः । उदात्ताः ।

८. **वनु याचने** । वनुते । वन्वाते । वन्वते । ववने । वनिष्यते । अवनिष्ट अवत । अवनिष्ठाः अवथाः । विवनिषते । वंवन्यते । वनित्वा वत्वा । वतः । वतवान् । वनोति । ववान ववनतुः ववनुरिति **चान्द्रा** (५) उदाहरन्ति । **दन्त्योष्ठ्यादिरयम्** ॥८॥

९. **मनु बोधने** । मनुते । मेने । मनिष्यते । अमनिष्ट अमत । मनित्वा मत्वा ॥९॥

**इति आत्मनेभाषावुदात्तौ** ।

१०. **डुकृञ् करणे** । करोति कुरुते । कुर्वः कुर्वहे । कुर्मः कुर्महे । क्रियते । चकार चक्रे । कर्त्ता । करिष्यति करिष्यते । करोतु कुरुताम् ।

---

(३) स्वर्णमिति पचाद्यच् । सुवर्णमित्यत्र माधवः—"तन्वादीनाञ्छन्दस्युपसंख्यानमिति (६।४।७७, वा) उपसर्गस्योवङ् । संज्ञाशब्दत्वाद् भाषायामप्यस्य प्रयोगः साधुरित्यात्रेयमैत्रेयौ । शोभनो वर्णोऽस्येत्यपि शक्यते व्युत्पादयितुम् ।" इति ।

(४) तृणमिति घञर्थे कः (३।३।५८, वा) कत्तृणं तृणजातिविशेषः । अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणमित्यमरः ।

(५) चान्द्रास्त्विमं परस्मैपदिनमाहुः ।

कुरु कुरुष्व । करवाणि करवै । अकरोत् अकुरुत । कुर्य्यात् कुर्वीत । क्रियात् कृषीष्ट । अकार्षीत् अकृत । अकार्ष्टाम् अकृषाताम् । अकारि । अकारिषाताम् अकृषाताम् । चिकीर्षति चिकीर्षते । चेक्रीयते । कृत्रिमम् । कारः । चक्रम् (६) । चक्रिः(७) । कारिमम् (८) । शुचः करः शूकरः पृषोदरादिपाठात् (६।३।१०९) चकारलोपः । अन्येषामपि दृश्यते (६।३।१३७) इति दीर्घश्चेति । उच्चारविट् शूकरः ॥१०॥

**इति विभाषितः** । उभयपद्ययम् । अनुदात्तः । नकारान्तेभ्यो भिन्नरूपमस्यानिट्त्वमकारस्योत्त्वञ्चेति पृथग्निर्देशः (९) ।

**वृद् इति** । तनादिगणपरिसमाप्तेः ।

**इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ**
**धातुप्रदीपे तनादीनां वृत्तिः ॥८॥**

———

(६) चक्रमिति घञर्थे के (३।३।५८, वा) कृञादीनां के (६।१।१२,वा) इति द्विर्वचनम् ।

(७) भाषायां धाञ्कृसृगमिजनिनमिभ्य इति (३।२।१७१, वा) किकिनौ ।

(८) भावप्रत्ययान्तादिमब् वक्तव्य इति (४।४।२०, वा) कारशब्दादिमप् ।

(९) ससुट्कस्य तु कृञो लिटि कृञोऽसुट इति (७।२।१०, वा) वक्तव्यादिट् । सञ्चस्कार सञ्चस्करतुः सञ्चस्करिथ सञ्चस्करिवेति । ऋतश्च संयोगादेरिति (७।४।१९) गुणः ।

# अथ क्र्यादय उच्यन्ते

१. **डुक्रीञ् द्रव्यविनिमये**। क्रीणाति क्रीणीते। परिक्रीणीते। विक्रीणीते। चिक्राय चिक्रिये। क्रेता। क्रेष्यति क्रेष्यते। अक्रीणात् अक्रीणीत। अक्रीणीताम् अक्रीणाताम्। अक्रीणात् अक्रीणि। अक्रैषीत् अक्रेष्ट। चिक्रीषति चिक्रीषते। चेक्रीयते। क्रापयति। अचिक्रपत्। क्रयः। क्रय्यम् क्रेयम्। क्रेता। क्रायकः। क्रीणन् क्रीणानः। क्रीत्वा। क्रीतः। क्रीत्रिमम्।

२. **प्रीञ् तर्पणे**। प्रीणाति प्रीणीते। पिप्राय पिप्रिये। प्रीणयति। अपिप्रीणत् प्रियः। छात्रप्रियोऽध्यायः ॥२॥

३. **श्रीञ् पाके**। श्रीणाति श्रीणीते। श्रेता। अश्रैषीत् अश्रेष्ट। श्राययति। अशिश्रयत् ॥३॥

४. **मीञ् हिंसायाम्**। मीनाति मीनीते। प्रमीणाति। प्रमीणीतः। ममौ मिम्ये। मिम्यतुः मिम्याते। माता। मास्यति मास्यते। मीयात् मासीष्ट। अमासीत् अमास्त। मित्सति मित्सते। मेमीयते। मापयति। अमीमपत्। मीत्वा। मीतः। प्रमाय। सुमयः। मयः ॥४॥

५. **षिञ् बन्धने**। सिनाति सिनीते। सिषाय सिष्ये। सेष्यति सेष्यते। सिसीषति सिसीषते। सितः। सिनोतीति सौवादिकस्य ॥५॥

६. **स्कुञ् आप्लवने**। स्कुनाति स्कुनीते स्कुनोति स्कुनुते। चुस्काव चुस्कुवे। स्कोता। स्कूयात् स्कोषीष्ट। अस्कौषीत् अस्कोष्ट। चुस्कूषति चुस्कूषते। चोस्कूयते। स्कावयति। स्कुत्वा। स्कुतः ॥६॥

७. **युञ् बन्धने**। युनाति युनीते। युयाव युयुवे। योता। युयूषति युयूषते। निरनुबन्धकस्य यौतेः "अथो युनुक्ष्णव" इति (१) सेट एव सनीवन्तर्धेत्यत्र (७।२।४९) ग्रहणम् ॥७॥

**इति उभयतोभाषा अनुदात्ताः।**

---

(१) गणस्थमूदन्तमुताञ्च रुस्नुवौ क्षुवं तथोर्णोतिमथो युनुक्ष्णव इति व्याघ्रभूतिकारिकांशोऽयम्।

८. **क्नूञ् शब्दे**। क्नूनाति क्नूनीते। चुक्नाव चुक्नुवे। क्नविता। अक्नावीत्। क्नूतः। **सर्वस्वे** तु क्नुञ् शब्द इति (२) ॥८॥

९. **द्रूञ् हिंसायाम्**। द्रूणाति द्रूणीते। द्रविता। अद्रावीत् अद्रविष्ट। द्रूतः। द्रूत्वा। दुद्रूषति दुद्रूषते। द्रवितुम् ॥९॥

१०. **पूञ् पवने**। पुनाति पुनीते। पुपाव पुपुवे। पविता। पविष्यति पविष्यते। अपावीत् अपविष्ट। पुपूषति पुपूषते। पोपूयते। पूत्वा। पूताः। विनाशे पूना यवाः ॥१०॥

११. **लूञ् छेदने**। लुनाति लुनीते। लविता। अलावीत् अलविष्ट। अलाविष्ट अलविध्वम् अलविढ्वम्। लूत्वा। लूनः। लूनिः। लवित्रम् ॥११॥

१२. **स्तॄञ् आच्छादने**। स्तृणाति स्तृणीते। तस्तार तस्तरे। स्तरिता स्तरीता। स्तीर्य्यात् स्तीर्षीष्ट स्तरिषीष्ट। अस्तारीत् अस्तीर्ष्ट अस्तरिष्ट अस्तरीष्ट। तिस्तीर्षति तिस्तरिषति तिस्तरीषति। स्तारयति। अतस्तरत् ण्यन्ताल्लुङ्। स्तीर्त्वा। विस्तीर्णम्। पुष्पप्रस्तारः। कीर्त्तिविस्तारः। वाग्विस्तरः। विष्टरः। विष्टारपङ्क्तिश्छन्दः। विस्तृणोति विस्तृतमिति स्तृञः सौवादिकस्य रूपम् ॥१२॥

१३. **कॄञ् हिंसायाम्**। कृणाति कृणीते। कीर्णः। कीर्णिः ॥१३॥

१४. **वॄञ् वरणे**। वृणाति वृणीते। ववार ववरे। वरिता वरीता। वूर्य्यात् वूर्षीष्ट वरिषीष्ट। अवारीत् अवरिष्ट अवरीष्ट अवूर्ष्ट। विवरिषति विवरीषति वुवूर्षति। वोवूर्य्यते। वूर्णः। वूर्णिः ॥१४॥

१५. **धूञ् कम्पने**। धूनाति धुनीते। धोता धविता। दुधाव दुधुवे। अधावीत् अधोष्ट अधविष्ट। दुधूषति दुधूषते। दोधूयते। धूनयति। अदूधुनत्। धूत्वा। धूनम्। धूनिः। धोतुं धवितुम्। धूतमिति धात्वन्तरस्य रूपम् ॥१५॥

**इति उदात्ता विभाषिताः**। एते क्नूञ्प्रभृतयः।

१६. **शॄ हिंसायाम्**। शृणाति। शीर्य्यते। शशार। शशरतुः

---

(२) ङपुस्तके च क्नुञ् शब्द इति ह्रस्वपाठः। तेनायमनिट्। अक्नौषीदिति च तत्र लुङि उदाहरणं दत्तम्। क्नोता। क्नोष्यति इत्यादि।

शश्रतुः। शरिष्यति शरीष्यति। शीर्य्यात्। अशारीत्। शिशरिषति शिशरीषति शिशीर्षति। शेशीर्य्यते। शीर्णम् शीर्णिः ॥१६॥

१७. पॄ **पालनपूरणयोः**। पृणाति। पपार। पपरतुः पप्रतुः। पूर्य्यात्। अपारीत्। पिपरिषति पिपरीषति पुपूर्षति। पोपूर्य्यते। पूर्त्तः। पूर्णं व्यापृतमिति धात्वन्तरस्य रूपम् ॥१७॥

१८. **स्वॄ हिंसायाम्**। स्वृणाति। स्वूर्णः। स्वूर्णिः। पवर्गीयवकारात् परो न ऋकारोऽयमिति तत्प्रकरणानुरोधेन अन्यत्र शॄ हिंसायामित्यत्रापि नोपदिष्टः (३) ॥१८॥

१९. **वॄ वरणे**। (४) वृणाति। वूर्णम्। वूर्णिः ॥१९॥

२०. **भॄ भर्त्सने**। भृणाति। भूर्णम्। भूर्णिः। भरः। निर्भरः। भरिमम् (५) ॥२०॥

२१. **दॄ विदारणे**। दृणाति। ददार। ददरतुः दद्रतुः। दारयति। ण्यन्ताल्लुङ्—अददरत्। दीर्णम्। दरः। दरी। दीर्णिः। दाराः ॥२१

२२. **जॄ वयोहानौ**। जृणाति। जजार। जजरतुः जेरतुः। जीर्णम्। जीर्णिः ॥२२॥

२३. **चॄ इत्येके**। चृणाति। चीर्णम्। चीर्णिः। (६) ॥२३॥

२४. **नॄ नये**। नृणाति। ननार। ननरतुः। नीर्णम्। नीर्णिः। नरः। नारी ॥२४॥

२५. **न्वी इत्येके**। न्विनाति। न्वीनः। न्वीनिः ॥२५॥

२६. **ॠ गतौ**। ॠणाति। अराञ्चकार। अरिता अरीता।

---

(३) अयं धातुर्माधवीयधातुवृत्तौ भट्टोजिग्रन्थे वा न दृश्यते।

(४) अस्य वृञ्वत् रूपम्। अपि तु नायमात्मनेपदी। कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थः उपयोगः। तेनास्योपादानं न व्यर्थम्। [द्र०—कॄ हिंसायाम् (धातुसूत्र २८) इत्यस्य वृत्तौ। यु० मी०]

(५) भरणेन निर्वृतमिति भावप्रत्ययान्तादिमब्वक्तव्य (४।४।२०, वा) इतीमप्।

(६) चॄ इत्यत्र "धॄ इति त्वेके इति मैत्रेयः। धृणातीत्यादि" इति धातुवृत्तौ मुद्रितम्। सिद्धान्तकौमुद्याञ्च "भॄ इत्येके। धॄ इत्यन्ये॥" इति वर्तते।

आर्णात् । ईर्य्यात् । आरीत् । अरिरिषति अरिरीषति ईर्षिषति । ईर्त्वा । समीर्णम् । समीर्णिः ॥२६॥

२७. **गॄ शब्दे** । गृणाति । जिगरिषति जिगरीषति जिगीर्षति । गीर्णः । गीर्णिः । गीः । गिरौ । गिरः ॥२७॥

२८. **कॄ हिंसायाम्** । कृणाति । कीर्णः । कीर्णिः । कॄञित्यनेनैव सिद्धे कॄ इत्येतस्य ल्वादिवद् द्विष्पाठफलं कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थम् । एवं वॄ इत्यस्य च ॥२८॥

२९. **मॄ इत्येके** । (७) मृणाति । मूर्णम् । मूर्णिः ॥२९॥

**इति उदात्ताः परस्मैपदिनः** शॄप्रभृतयः ।

३० **ज्या वयोहानौ** । जिनाति । जीयते । जिज्यौ । ज्याता । ज्यास्यति । जीयात् । अज्यासीत् । जिज्यासति । जेजीयते । ज्यापयति । जीत्वा । जीनः । प्रज्याय । ज्यानिः । ब्रह्मज्यः (८)॥३०॥

३१. **व्ली वरणे** । व्लिनाति । विव्लाय । व्लेता । अव्लैषीत् । विव्लीषति । वेव्लीयते । व्लेपयति । व्लीत्वा । व्लीनम् । व्लीनिः ॥३१॥

३२. **री गतिरेषणयोः** । रिणाति । रिराय । रिर्य्यतुः । अरैषीत् । रेपयति । रीणम् । रीणिः ॥३२॥

३३. **ली श्लेषणे** । लिनाति । लिलाय ललौ । लिल्यतुः । विलास्यते विलेष्यते । लीनम् । लीनिः ॥३३॥

३४. **प्ली च** । श्लेषण इत्यपेक्षते । प्लिनाति । प्लीनम् (९)॥३४

**वॄद् इति** । ल्वादिपरिसमाप्तेः । प्वादयस्त्वागणान्ताः । तेषामपि समाप्त्यर्थमत्र वॄत्करणमित्येके । तेषां व्रीणाति भ्रीणातीति

---

(७) अत्र माधवः—"मॄ हिंसायामित्येके इति मैत्रेयः । एवं वदतोऽस्य पूर्वं मृणातेः पाठोऽनभिमत इति प्रतीयते ।" इति ।

(८) ब्रह्म जिनातीति कविधौ सर्वत्र प्रसारणिभ्यो ड इति (३।२।३,वा) वक्तव्याद् डप्रत्ययः ।

(९) ग घ ङ च पुस्तकेषु तु "ल्यी च । श्लेषण इत्यपेक्षते । ल्यिनाति । ल्यीनम्" इति पाठः ।

दीर्घः । आगणान्तत्वेऽपि भ्रीपर्य्यन्ता एव चतुर्विंशतिरुपयुज्यन्ते (१०)।

३५. **व्री वरणे** । व्रीणाति । व्रीतम् । व्रीतिः ॥३५॥

३६. **भ्री भरणे** । भ्रीणाति । भ्रीतम् । भ्रीतिः ॥३६॥

३७. **क्षीष् हिंसायाम्** । क्षीणाति । क्षिया । क्षीत्वा । क्षीतवान् (११) क्षीतम् ॥३७॥

३८. **ज्ञा अवबोधने** । जानाति । प्वादीनां ह्रस्वः (७।३।८०) इति ह्रस्वत्वमिह नास्ति । दीर्घान्तादेशविधानबलात् । ह्रस्वत्वे वातो दीर्घो यञि (७।३।१०१) इति दीर्घत्वम् । सर्पिषो जानीते । मधुनो जानीते । जज्ञौ । ज्ञाता । अज्ञासीत् । जिज्ञासते । जाज्ञायते । ज्ञापयति । ज्ञातिः । ज्ञातम् । सर्वज्ञः । प्रज्ञानम् । प्राज्ञः । संज्ञा । पथिप्रज्ञः । मनसाज्ञायी ॥३८॥

३९. **बन्ध बन्धने** । बध्नाति । बबन्ध । बन्धा । भन्त्स्यति । बध्नातु । बधान । बध्यात् बध्नीत । अभान्त्सीत् । बिभन्त्सति । बाबध्यते । बन्धयति । बन्धः । बद्धा । उद्बध्य । बद्धः । अजन्तपरस्मैपदिषु चास्योपदेशोऽनिट्प्रकरणानुरोधात् ॥३९॥

**इति परस्मैभाषा** । ज्याप्रभृतय एते परस्मैपदिनः । अनुदात्ताः ।

४०. **वृङ् सम्भक्तौ** । वृणीते । वव्रे । वरिता वरीता । वरिष्यते वरीष्यते । वरिषीष्ट वृषीष्ट । अवृत अवरिष्ट अवरीष्ट । विवरिषते वुवूर्षते । वेव्रीयते । वर्य्या । वराकः ॥४०॥

**आत्मनेभाषः । उदात्तः ।**

४१. **श्रन्थ मोचनहर्षणयोः** । श्रन्थनाति । श्रथ्नीते मेखला स्वयमेव । शश्रन्थ । शश्रन्थतुः श्रेथतुः । श्रन्थिष्यति । श्रथ्यात् । अश्रन्थीत् । अश्रन्थिष्ट मेखला स्वयमेव । शिश्रन्थिषति । शाश्रथ्यते । श्रन्थना । श्रन्थित्वा श्रथित्वा ॥४१॥

---

(१०) "आगणान्तत्वेऽपि भ्रीपर्य्यन्ता एव ते चतुर्विंशतिरेवं दृश्यन्ते । अन्येषामनुपयोगादिति मान्द्राजपुस्तकद्वये पाठः ।

(११) क्षियो दीर्घादिति (८।२।४६) तु कृतदीर्घस्य क्षियतेरेवेत्याहुः । व्रीभ्रीक्षीषिति "एषां त्रयाणां ह्रस्वः । केषाञ्चिन्मते तु न ।" इति भट्टोजिः ।

**४२. मन्थ विलोडने** । मथ्नाति । मथ्यते । ममन्थ । अमन्थीत् । अमन्थि । मन्थाः । मन्थानौ । मन्थतीति भ्वादिपाठात् ।।४२।।

**४३. श्रन्थ ग्रन्थ सन्दर्भे** । ग्रथ्नाति । ग्रथ्नीते माला स्वयमेव । अग्रन्थिष्ट माला स्वयमेव । ग्रन्थिः । अर्थभेदात् श्रन्थेः पुनः पाठः । श्रथ्नाति ।।४३,४४।।

**४४. कुन्थ संश्लेषणे** (१२) । कुथ्नाति । चुकुन्थ । कुथित्वा कुन्थित्वा । कुन्था ।।४५।।

**४५. मृद क्षोदे** । मृद्नाति । ममर्द । मर्दिता । मृदित्वा । मर्दनम् । मृत् ।।४५।।

**४६. मृड च** । मृड्नाति । ममर्ड । मृडित्वा मृडतीति तुदादिपाठात् ।।४७।।

**४७. गुध रोषे** । गुध्नाति । गुधित्वा । गुधितम् । गुध्यतीति गणान्तरे ।।४८।।

**४८. कुष निष्कर्षे** । कुष्णाति । चुकोष । निष्कोषिता निष्कोष्टा । निष्कोषिष्यति । निष्कोक्ष्यति । निरकोषीत् निरकुक्षत् । निश्चुकोषिषति निश्चुकुक्षति । निष्कुषितम् । कुष्णति पादः स्वयमेव कुष्यते पादः स्वयमेव ।।४९।।

**४९. क्षुभ सञ्चलने** । क्षुभ्नाति । क्षुभ्नीतः । क्षुभ्नातु । क्षुभाण । अक्षोभीत् । क्षोभते क्षुभ्यतीति गणान्तरपाठात् ।।४८।।

**५०. णभ तुभ हिंसायाम्** । नभ्नाति । प्रणभ्नाति । प्रणनाभ । प्रणेभतुः । प्राणभ्नात् । तुभ्नाति । नभते नभ्यति तोभते तुभ्यतीति गणान्तरपाठात् ।।५१,५२।।

**५१. क्लिशू विबाधने** । क्लिश्नाति । क्लेशिता क्लेष्टा । चिक्लेशिषति चिक्लिशिषति चिक्लिक्षति । क्लिशित्वा क्लिष्ट्वा । क्लिशितं क्लिष्टम् । क्लेशः । क्लेश्यम् । क्लिश्यत इति दैवादिकस्य ।।५३।।

**५२. अश भोजने** । अश्नाति । आश । अशिता । अशिष्यति । अश्नातु । अशान । अश्यात् । आशीत् । अशिशिषति । अशाश्यते । अनाश्वान् (१३) । अशितुम् । अशनम् । अश्नन् ।।५४।।

---

(१२) कुन्थ संक्लेशे इति ङपुस्तके पाठः ।

(१३) धृतजयधृतेरनाशुष इति भारविप्रयोगः ।

**५३. उध्रस उञ्छे** । ध्रस्नाति । दध्रास । ध्रसिता । ध्रसित्वा ध्रस्त्वा । ध्रस्तः । **उदितो वा** (७।२।५६) इति विशेषणार्थमुदित्त्वम् केचित्तूत्वपूर्वस्य ध्रसेर्गणपाठमिच्छन्ति । तथा च उध्रस्नातीति रूपम् । न तु ध्रस्नातीति ॥५५॥

**५४. इष आभीक्ष्ण्ये** । इष्णाति । इयेष । एषिता ॥५६॥

**५५. विष विप्रयोगे** । विष्णाति । विषम् ॥५७॥

**५५. प्रुष प्लुष स्नेहनमोचनपूरणेषु** । प्रुष्णाति । प्रोषिष्यति । प्रोषित्वा प्रुषित्वा । प्रुषितम् । प्लुष्णाति । प्लोषिष्यति । प्लोषित्वा प्लुषित्वा । प्लुषितम् । दाहार्थे भ्वादिगणे । एतौ उदितावुक्तौ ॥५८, ५९॥

**५७. पुष पुष्टौ** । पुष्णाति । अपोषीत् । पोषिता । पोषतीति भ्वादौ, पुष्यतीति दैवादिकस्य ॥६०॥

**५८. मुष स्तेये** । मुष्णाति । मोषिता । मुमुषिषति । मुषित्वा । मुषितम् (१४) ॥६१॥

**५९. खच भूतप्रादुर्भावे** । खच्ञाति । चखाच । खचिता । खच्ञातु। चखान । खच्यात् । अखचीत् अखाचीत् । खचितम् ॥६२॥

**६०. खव इत्येके** । खौनाति । चखाव । खविता । खौनातु । खौनीहि । अखौनात् । खौनीयात्(१५)। खवितम् । खु इति **केचित्** । खुनाति ॥६३॥

**इति परस्मैभाषा उदात्ताः** । हलन्ता एते श्रन्थादयः परस्मैपदिनः सेटः (१६) ।

---

(१४) सैन्यरेणुमुषितार्कदीधितिरिति रघुकाव्ये । कथं तर्हि मुष्टं प्रति ग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येनेति शाकुन्तले? चिन्त्यम् । आदितश्च (७।२।१६) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादाश्वस्तवान्तादिवदित्येके । अन्ये तु उणादिषु मुष्टमिति द्रष्टव्यम् इत्याहुः ।

(१५) खौनातीत्यत्रोठि कृते (६।४।१९) एत्येधत्यूठ्स्विति (६।१।८९) वृद्धिः ।

(१६) अस्मात् परं हेट चेति धातुं भट्टोजिः पठति । "अत्र क्वचित् हेठ चेति पठ्यत" इति तु माधवः ।

**६१. ग्रह उपादाने**। गृह्णाति गृह्णीते। जग्राह जगृहे। जगृहिव जगृहिवहे। ग्रहीता। ग्रहीष्यति ग्रहीष्यते। अग्रहीत् अग्रहीष्ट। अग्रहीढ्वम् अग्रहीध्वम् अग्रहीष्ट। जिघृक्षति जिघृक्षते। जरीगृह्यते। ग्रहीतुम्। गृहीतम्। गृहीतिः। ग्रहः। उद्ग्राहः। ज्योतिषि ग्रहः। जलचरे ग्राहः। गृहम्। ग्राही ॥६४॥

**इति विभाषित उदात्तः**। अयं स्वरितेदिति पृथगस्योपन्यासः।

**वृत्** इति क्र्यादिपरिसमाप्तेः।

**इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ**
**धातुप्रदीपे क्र्यादीनां वृत्तिः ॥९॥**

———

# अथ चुरादय उच्यन्ते

१. **चुर स्तेये**। चोरयति। (१) चुरादि णिजन्ताण् णिचश्च (१।३।७४) इत्यात्मनेपदं न भवतीत्येके। **धातुपारायणे** त्वात्मनेपदमुदाहृतम्—चोरयत इति। चोरयाञ्चकार चोरयाञ्चक्रे। चोरयिता। चोरयिष्यते। चोरयतु। चोरयताम्। अचोरयत् अचोरयत। चोरयेत् चोरयेत। चोर्य्यात् चोरयिषीष्ट। अचूचुरत् अचूचुरत। चुचोरयिषति चुचोरयिषते। कर्मणि चिण्वदिट्पक्षे तस्यासिद्धत्वाण्णिलोपः—चोरयिष्यते चोरिष्यते। चोरिता चोरयिता। चोरयिषीष्ट वा चोरिषीष्ट धनं देवदत्तेन। ण्यन्तेभ्यो यङ्नास्तीति सूचिसूत्रि (३।१।२२, वा) इत्यत्र **न्यासकारः**। **रूपावतारे** तु णिलोपे प्रत्ययोत्पत्तेः प्रागेव कृते सत्येकाच्त्वाद् यङुदाहृतश्चोचूर्य्यत इति। चोरः चौरः (२)। चोरणा। चुरेतिच्छत्रादिगणपाठात् सिध्यति ॥१॥

२. **चिति स्मृत्याम्**। चिन्तयति। चिन्तयाञ्चकार। चिन्ता। चिन्तिपूजिकथिकुम्बिचर्च्चश्चेति (३।३।१०५) अकारप्रत्यये विधातव्ये यदङ्विधानं तद्गुणाभावार्थम्। तत्सामर्थ्यात् कदाचिण्णिलोपो नास्तीति तत्र चिन्तियेतीयङ् उदाहर्त्तव्यः। एवं पूजिया ॥२।

३. **यत्रि संकोचे**। यन्त्रयति। यन्त्रणा ॥३॥

४. **स्फुडि परिहासे**। स्फुण्डयति। स्फुण्डिका ॥४॥

५. **लक्ष दर्शनाङ्कनयोः**। लक्षयति। लक्ष्यम्। लक्षणम्। लक्ष्मीः।

---

(१) सत्यापपाशेत्यादिना (३।१।२५) स्वार्थे चुरादिभ्यो णिज्विधानादणिचश्चुरादेः प्रयोगाभावः। अनित्यण्यन्ताश्चुरादय इति त्वेके। एतत्तु भाष्यविरुद्धम्। घुषिरविशब्देन (७।३।२३) इत्यस्य विचारे "ज्ञापयत्याचार्य्यो विशब्दने घुषेर्निभाषा णिज्भवतीति। किमेतस्य ज्ञापने प्रयोजनम्? महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवा इत्येष प्रयोग उपपन्नो भवती"ति भगवता विशिष्टविषयत्वेन अनित्यण्यन्तत्वस्याभिधानात्। अत एव 'आधृषाद्वा'इति गणसूत्रस्य न वैयर्थ्यम् ॥

(२) चोर इति पचाद्यच्। चौर इति प्रज्ञादित्वात् स्वार्थेऽण्।

लक्ष्मीत्यपि केचित् । लक्ष्मणः । स्वरितेत्त्वमस्य **केचित्** प्रतिपद्यन्ते । लक्षयति लक्षयते इति । एवञ्चास्य स्वरितेत्त्वं ज्ञापकं णिचश्च (१।३। ७४) इति चुरादिणिजन्तादात्मनेपदं न भवतीति ॥५॥

६. **कुद्रि अनृतभाषणे** । कुन्द्रयति अचुकुन्द्रत् ॥६॥

७. **लड उपसेवायाम्** । लाडयति लाडयाञ्चकार ॥७॥

८. **मिदि स्नेहने** । मिन्दयति ॥८॥

९. **ओलडि उत्क्षेपणे** । ओलण्डयति । ओलण्डकः । ओलण्डा । ओलण्डितः (३) ॥९॥

१०. **जल अपवारणे** । जालयति । जालम् ॥१०॥

११. **पीड अवगाहने** । पीडयति । अपीपिडत् अपिपीडत् । पीडा ॥११॥

१२. **नट अवस्यन्दने** । चौरस्योन्नाटयति । प्रनाटयति (४) ॥१२

१३. **श्रथ प्रतियत्ने** (५) । श्राथयति । अशिश्रथत् ॥१३॥

१४. **बध संयमने** । बाधयति । अबीबधत् ॥१४॥

१५. **पॄ पूरणे** । पारयति । पार्य्यते । पारयः । पारकः ॥१५॥

१६. **ऊर्ज बलप्राणधारणयोः** । ऊर्जयति । और्जिजत् । ऊर्जिजयिषति । ऊर्जा । ऊर्जस्वी । ऊर्जितम् । ऊर्क्, ऊर्जौ ॥१६॥

१७. **वर्ण चूर्ण प्रेरणे** । वर्णयति । चूर्णयति । वर्णं गृह्णाति वर्णयति । चूर्णैरवध्वंसयति चूर्णयतीति व्युत्पत्त्यन्तरम् ॥१७, १८॥

१८. **प्रथ प्रख्याने** । प्राथयति । अपप्रथत् ॥१९॥

---

(३) क्वचिदुकारादिर्गृह्यते । उलण्डयतीत्यादि । च पुस्तके तु लण्डयति । लण्डकः । लण्डेति वर्तते । अत्र माधवः—"केचिदोदितं पठन्ति । तेषां मते लण्डयति । अपरे तूकारादिं पठन्ति । तदोकारं धात्ववयवमुदाहरतां मैत्रेयादीनाम्, इत्संज्ञकत्वमभिदधतामन्येषाञ्च सर्वेषामनभिमतम् ।" इति ।

(४) अयं न णोपदेशः ।

(५) भट्टोजिमते श्रथ प्रयत्ने इति । माधव आह "श्रथ प्रस्थान इति मैत्रेय" इति । अस्माकं पुस्तकेषु तु एतन्नास्ति । परन्तु सर्वत्रैव श्रथ प्रतियत्न इति पाठो लभ्यते ।

१९. **पृथ प्रक्षेपे** । पर्थयति । अपीपृथत् अपपर्थत् ॥२०॥

२०. **षम्ब सम्बन्धे** । सम्बयति । सम्बयाञ्चकार । अससम्बत् ॥२१॥

२१. **शम्ब च** । शम्बयति । शम्बलम् ॥२२॥

२२. **भक्ष अदने** । भक्षयति । भक्षयाञ्चकार । अबभक्षत् ॥२३॥

२३. **कुट्ट छेदनभर्त्सनयोः** । कुट्टयति मांसम् । कुट्टकः । षाकन्—कुट्टाकः कुट्टाकी । कुट्टः । कौट्टिकः । कुट्टनम् । कुट्टिमम् ॥२४॥

१४. **पुट्ट चुट्ट अल्पीभावे** । पुट्टयति । चुट्टयति ॥२५, २६॥

२५. **अट्ट षुट्ट अनादरे** । अट्टयति । आट्टिटत् ✡ । अट्टिटयिषति । सुट्टयति । सुट्टयाञ्चकार । असुषुट्टत् : सुषुट्टयिषति ॥२८, २८॥

२६. **लुण्ठ स्तेये** । लुण्ठयति । षाकन्—लुण्ठाकः लुण्ठाकी ॥२९॥

२७. **शठ श्वठ संस्कारगत्योः** । शाठयति । श्वाठयति ॥३०,३१॥

२८ **श्वठि इत्येके** । श्वण्ठयति ॥३२॥

२९. **तुजि पिजि हिंसाबलादाननिकेतनेषु** । तुञ्जयति । पिञ्जयति । एतौ पटादिदण्डके गणान्तरेऽपि पठितौ ॥३३, ३४॥

३०. **पिस गतौ** । पेसयति ॥३५॥

३१. **षान्त्व सामप्रयोगे** । सान्त्वयति । अससान्त्वत् । सिषान्त्वयिषति ॥३६॥

३२. **श्वल्क वल्क परिभाषणे** । श्वल्कयति । वल्कयति ॥३७,३८

३३. **ष्णिह स्नेहने** । स्नेहयति । असिष्णिहत् । सिष्णेहयिषति ॥३९॥

३४. **स्मिट अनादरे** । स्मेटयति ॥४०॥

३५. **स्मिङ् इत्येके** । स्माययते (६) ॥४१॥

३६. **श्लिष आलिङ्गने** । श्लेषयति ॥४२॥

३७. **पथि गतौ** । पन्थयति ॥४३॥

---

✡ अयं दोपधः । तेन न दकारस्य द्विर्वचनम् । ततः ष्टुत्वम् । यु० मो०

(६) चपुस्तके स्मि इत्येके स्माययतीत्यस्ति । माधवस्त्वाह स्मिङ् इत्येके इति मैत्रेय इति ।

३८. **पिच्छ कुट्टने** । पिच्छयति ।।४४।।

३९. **छदि संवरणे** । छन्दयति ।।४५।।

४०. **श्रण दाने** । श्राणयति । विश्राणय । विश्राणनम् । श्रणयतीति हेतुमणिच् (७) ।।४६।।

४१. **तड आघाते** । ताडयति । अतीतडत् । ताडितः । तडित् ।।४७।।

४२. **खड खडि कडि भेदने** । खाडयति । खण्डयति । कण्डयति ।।४८—५०।।

४३ **कुडि रक्षणे** । कुण्डयति । कुण्डम् ।।५१।।

४४. **गुडि वेष्टने** । गुण्डयति ।।५२।।

४५. **वटि विभाजने** । वण्टयति । वटि विभजन इति भ्वादौ पठ्यते । ततो हेतुव्यापारे णिचि विभाजनेऽर्थे वण्टयतीति सिध्यतीति । किन्त्वसौ कर्त्त्रभिप्राये क्रियाफले आत्मनेपदी । अनेन पुनस्तत्रापि वण्टयतीति परस्मैपदं स्यात् । अन्ये तु पुनर्वैचित्र्यार्थमस्योपादानमिच्छन्ति ।।५३।।

४६. **चडि कोपे** । चण्डयति । चण्डः ।।५४।।

४७. **मडि भूषायाम् हर्षे च** । मण्डयति । मण्डना । मण्डनः । मण्डयन्तः ।।५५।।

४८. **भडि कल्याणे** । भण्डयति । भण्डयाञ्चकार ।।५६।।

४९. **छर्द्द वमने** । छर्दयति । प्रच्छर्दिका ।।५७।।

५० **पुस्त बुस्त आदरानादरयोः** । पुस्तयति । पुस्तकम् । बुस्तयति ।।५८,५९।।

५१ **चुद सञ्चोदने** । चोदयति । चोदयामास । चोद्यम् । ।।६०।।

५२. **नक्क धक्क नाशने** । नक्कयति । प्रनक्कयामास । धक्कयति ।।६१,६२।।

५३. **चक्क चुक्क व्यथने** । चक्कयति । चक्कनम् । चुक्कयति ।६३ ६४।।

---

(७) घटादिपाठान्मित्त्वम् ।

**५४. क्षल शौचकर्मणि** । क्षालयति वस्त्रम् । प्रक्षालयाञ्चकार । क्षालः । अवक्षालः ।।६५।।

**५५. तल प्रतिष्ठाकरणे** । तालयति । तालम् । तलमित्यपि भवति । चुरादिणिचो यथाभिधानमनित्यत्वात । तत्र घुषिरविशब्दने (७।२।२३) इति विशब्दने प्रतिषेधमेव ज्ञापकं सामान्यमिच्छन्ति (8) ।।६६।।

**५६. तुल उन्माने** । तोलयति । तोलयामास । णिचोऽनित्त्यत्वात् तुला (९)। तुलां करोति तुलयति ।।६७।

**५७. दुल उत्क्षेपे** । दोलयति । दोला । दुलिः । दौलेयः ।।६८।।

**५८. पुल महत्त्वे** । पोलयति । पोलकम् ।।६९।।

**५९. चुल समुच्छ्राये** । चोलयति । चोलः ।।७०।।

**६०. मूल रोहणे** । मूलयति । मूलम् । मूलकम् ।।७१।।

**६१. कल पिल क्षेपे** । कालयति । कालः । पेलयति । पेलः ।।७२, ७३।।

**६२. बिल भेदने** । बेलयति ।।७४।।

**६३. तिल स्नेहने** । तेलयति ।।७५।।

**६४. बल भृतौ (१०)** । बालयति । बालः । बाला ।।७६।।

**६५. पल रक्षणे** । पालयति ।।७७।।

**६६. लूष हिंसायाम्** । लूषयति । लूषकः ।।७८।।

**६७. शूर्प माने** । शूर्पयति । शूर्पः ।।७९।।

**६८. चुट च्छेदने** । चोटयति ।।८०।।

---

(८) एतेन णिजभावेऽचि मैत्रेयमते तलशब्दः । अन्ये तु संज्ञापूर्वकविधेरनित्यत्वाद् वृद्ध्यभावेऽचि तलमिति व्युत्पादयन्ति ।

(९) मतान्तरे तुल्यार्थैरिति निर्देशाद् (३।३।७२) निपातनेऽङि णिलुकि तुलेत्याहुः । णिजभावे प्रमाणाभावात् ।

(१०) गघपुस्तकयोः 'चल भृतौ । चलयति' इति पाठान्तरम् । तदेव भट्टोजिमाधवादिसम्मतम् ।

६९. **मुट सञ्चूर्णने**। मोटयति। मोटनम् ॥८१॥

७०. **पसि नाशने**। पंसयति परम्। परिपंसनम्। पांसुः। पांसुरः ॥८२॥

७१. **व्रज मार्गसंस्कारयोः। गतौ च**। व्राजयति (११) ॥८३॥

७२. **चपि गत्याम्**। चम्पयति। चम्पयामास। चम्पः ॥८४॥

७३. **क्षपि क्षान्त्याम्**। क्षम्पयति ॥८५॥

७४. **क्षजि कृच्छ्रजीवने**। क्षञ्जयति। क्षञ्जयामास ॥८६॥

७५. **श्वर्त्त गत्याम्**। श्वर्त्तयति। श्वर्त्तयाञ्चकार। श्वर्त्तयामास ॥८७॥

७६. **ज्ञप मिच्च**। ज्ञपयति। जिज्ञापयिषति ज्ञीप्सति। ज्ञप्तः ज्ञपितः (१२)। ज्ञापने मारणादिषु चाभिधानमस्यैव। तत्र घटादित्वात् सिध्यति। कर्त्रभिप्रायेऽपि क्रियाफले परस्मैपदार्थं तत्राप्यस्य वृत्तिरिष्यते ॥८८॥

७७. **यम च परिवेषणे**। चकारेण मिदित्यनुकृष्यते यमयति। यमयाञ्चकार ॥८९॥

७८. **चप कल्कने**। अत्रापि मिदिति वर्तते। चपयति ॥९०॥

७९ **बल प्राणने**। मिदित्येव। बलयति ॥९१॥

(1) **नान्ये मितोऽहेतौ** (१३)। ज्ञपादि धातुभ्योऽन्ये चौरादिका अहेतौ णिजि स्वार्थिके णिचि मितो न भवन्ति। तेन अमशमिप्रभृतिषु मित्त्वाभावं ज्ञपादिभिन्नेषु चौरादिकेषूपदर्शयिष्यते।

---

(११) ङपुस्तके वज मार्ग संस्कारगत्योः। वाजयति। मार्गयति इति पाठः। गपुस्तके वज मार्गसंस्कारगत्योः। वाजयति अवीवजदिति पाठः। घपुस्तके व्राजयति अवीव्रजदिति।

(१२) वा दान्त (७।२।२२)इत्यत्र ज्ञप्त इति निपातनं ज्ञपेरिति निष्ठायां सेटीत्यत्र (६।४।५२) कैयटपदमञ्जर्य्योरुक्तत्वाद इह ज्ञप्तः ज्ञपित इति मैत्रेयेणोदाहरणस्य प्रदर्शनमयुक्तमिति माधवः।

(१३) गणेऽस्मिन्निदमेकं गणसूत्रम्। एवञ्चात्र गणसूत्राणि १४ संख्यकानि।

८०. घट्ट चलने । घट्टयति । घट्टना ॥९२॥

८१. खट्ट संवरणे । खट्टयति । अचखट्टत् ॥९३॥

८२. षट्ट स्फिट चुवि हिंसायाम् । सट्टयति । सिषट्टयिषति । स्फेटयति । चुम्बयति । चुभि इत्येके । चुम्भयति ॥९४-९६॥

८३. पूल संघाते (१४) । पूलयति ॥९७॥

८४. पुंस अभिवर्धने । पुंसयति पुंसयामास ॥९८॥

८५. पुस्त संघाते । पुस्तयति । पुस्तकम् ॥९९॥

८६. टकि बन्धने । टङ्कयति । टङ्कः ॥१००॥

८७. धूस कान्तिकरणे । धूसयति । धूसयामास । धूसरः । धूष इत्येके । धूषयति ॥१०१॥

८८. कीट बन्धने । कीटयति । कीटः ॥१०२॥

८९. चूर्ण संकोचने । चूर्णयति ॥१०३॥

९०. पूज पूजायाम् । पूजयति । अपूपुजत् । पूजा । पूगः ॥१०४॥

९१. अर्क स्तवने । अर्कयति । अर्कः ॥१०५॥

९२. शुठ आलस्ये । शोठयति । शोठः ॥१०६॥

९३. शुठि शोषणे । शुण्ठयति ॥१०७॥

९४. जुड प्रेरणे । जोडयति । जोडितम् ॥१०८॥

९५. गज मार्ज शब्दे । गर्जयति✡ । मार्जयति (१५) ॥१०९, ११०॥

९६. घृ संप्रस्रवणे । घारयति । घारयामास ॥१११॥

---

(१४) अस्मात् प्राक् गघङ्चपुस्तकेषु प्युस (ष) उत्सर्गे (उत्क्षेपे) । प्योसयति (प्योषयति) व्यप (व्यय) क्षेपे । व्यापयति (व्याययति) । विव्यापयामास । व्याप इति पठितम् । माधवस्त्वाह एतान् मैत्रेयादयो न पठन्तीति ।

✡ धातुसूत्रे 'गज' पाठात्, उत्तरटिप्पण्यां च 'गर्ज मार्ज गर्जयति माजयति' इति पाठान्तरनिर्देशाच्चेह 'गाजयति' पाठो युक्तः । यु० मी०

(१५) ङचपुस्तकयोर् गर्ज मार्ज गर्जयति माजयतीति पाठः [अत्रापि 'माजयति' पाठात् 'गर्ज मार्ज' इत्यत्र 'गज माज' पाठेन भाव्यम् । यु० मी०]

**९७. पचि विस्तारे वचने ।** पञ्चयति । प्रपञ्चः । पङ्क इति भौवादिकस्य पञ्चतेः ॥११२॥

**९८. तिज निशाने ।** तेजयति । तेजनम् ॥११३॥

**९९. कृत संशब्दने ।** कीर्त्तयति । अचीकृतत् अचिकीर्त्तत् । अचकीर्त्तदिति तु **धातुपारायणम्** । कीर्त्तिः । कीर्त्तनम् । कीर्त्तनेति युजपि कालापैरिष्यते ॥११४॥

**१००. वर्द्ध च्छेदनपूरणयोः ।** वर्धयति । वर्धयाञ्चकार ॥११५॥

**१०१. कुबि आच्छादने ।** कुम्बयति । कुम्बा ॥११६॥

**१०२. लुबि तुबि तुपि अर्द्दने ।** लुम्बयति । तुम्बयति । तुम्बी । तुम्पयति ॥११७-११९॥

**१०३. ह्र(ह्ल)प व्यक्तायां वाचि ।** ह्रा(ह्ला)पयति । ह्रा(ह्ला)पयामास ॥१२०॥

**१०४. चुटि छेदने ।** चुण्टयति । चुडि इत्येके ॥१२१॥

**१०५. इल प्रेरणे ।** एलयति । प्रेलयति । ऐलिलत् । मा भवानिलिलत् (१६) ॥१२२॥

**१०६. म्रक्ष म्रक्षणे ।** म्रक्षयति । म्रक्षणम् । म्रक्षयामास । अन्यत्र म्रक्षति ॥१२३॥

**१०७. म्लेच्छ अव्यक्तायां वाचि ।** म्लेच्छयति । म्लेच्छयामास । म्लेच्छतीति गणान्तरे ॥१२४॥

**१०८. ब्रूस बर्ह हिंसायाम् ।** ब्रूसयति । बर्हयति ॥१२५,१२६॥

**१०९. गर्ध अभिकाङ्क्षायाम् ।** गर्धयति । गर्धयामास ॥१२७॥

**११०. पूर्व निकेतने ।** पूर्वयति । पूर्वयामास ॥१२८॥

**१११. जसि रक्षणे ।** जंसयति ॥१२९॥

**११२. ईड स्तुतौ ।** ईडयति । ईडयामास । ऐडिडत् ॥१३०॥

---

(१६) छन्दस्यस्य न चङ् नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः (३।१।५१) इत्यनेन काममैलयीरिति ।

११३. **जसु हिंसायाम्** । **चौरस्योज्जासयति** (१७) ॥१३१॥

११४. **पिडि संघाते** । पिण्डयति । पिण्डः ॥१३२॥

११५. **रुष रोषे** । रोषयति । रुट इत्येके । रोटयति ॥१३३॥

११६. **डिप क्षेपे** । डेपयति ॥१३४॥

११७. **ष्टूप समुच्छ्राये** । स्तूपयति । अतूष्टुपत् । स्तूपः ॥१३५॥

**इति परस्मैभाषा उदात्ताः** ।

**आ कुस्मादात्मनेपदिनः** । कुस्मपर्य्यन्ता आत्मनेपदिन इत्यर्थः ।

११८. **चित सञ्चेतने** । चेतयते । चेतयमानः । चेतयामास । चिचेतयिषते ॥१३६॥

११९. **दशि दंशने** । दंशयते (१८) ॥१३७॥

१२०. **दसि दर्शनहिंसयोः** । दंसयते । दंसितम् ॥१३८॥

१२१. **डप डिप संघाते** । डापयते । डेपयते ॥१३९, १४०॥

१२२. **तत्रि कुटुम्बधारणे** । तन्त्रयते । तन्त्रम् । स्वतन्त्रः ॥१४१॥

१२३. **मत्रि गुप्तभाषणे** । मन्त्रयते । अमन्त्रयत । अममन्त्रत । मन्त्रः ॥१४२॥

१२४. **स्पश ग्रहणश्लेषणयोः** । स्पाशयते । अन्यत्र स्पशति स्पशते ॥१४३॥

१२५. **तर्ज भर्त्स सन्तर्जने** । तर्जयते । तर्जना । तर्जतीति भ्वादिपाठात् । भर्त्सयते । भर्त्सना । ॥१४४, १४५॥

१२६. **बस्त गन्ध अर्दने** । अर्दने गतौ हिंसायां याचने वेत्यर्थः । बस्तयते । बस्तः । गन्धयते । गन्धः । गन्धकम् ॥१४६,१४७॥

१२७. **हिष्क हिंसायाम्** । हिष्कयते । हिष्कितम् ॥१४८॥

---

(१७) उदित्करणादस्य णिजनित्य इति ज्ञापितम् । तेन जसति । जसित्वा जस्त्वा जासयित्वा ।

(१८) अनन्तरं गघपुस्तकयोः अर्द हिसि हिंसायाम् । अर्दयते । हिंसयते इति दृश्यते । ततो दस इति तत्र पाठः । तस्य दासयते । दासितुमिति चोदाहरणं दत्तम् ।

१२८. **णिष्क परिमाणे** । निष्कयते । प्रणिष्कयते । निष्कः ।१४९।

१२९. **लल ईप्सायाम्** । लालयते । लालना ।।१५०।।

१३०. **कूण संकोचने** । कूणयते । कूणिः ।।१५१।।

१३१. **तूण पूरणे** । तूणयते । तूणः । तूणीरः ।।१५२।।

१३२. **भ्रूण आशंसायाम्** । भ्रूणयते । भ्रूणयाञ्चके । भ्रूणः । भ्रूणहा । भ्रूणहत्या ।।१५३।।

१३३. **शठ श्लाघायाम्** । शाठयते । शाठना ।।१५४।।

१३४. **यक्ष पूजायाम्** । यक्षयते । यक्षः ।।१५५।।

१३५. **स्यम वितर्के** । स्यामयते । **न्यासकृत्** तु स्य(श्य)ल वितर्के इति नाचार्य्यराजर्त्विवसंयुक्तज्ञात्याख्येभ्य (६।२।१३३) इति स्वर-सूत्रे स्या (श्या) लसंप्रतिपत्त्यर्थं पठितवान् (१९) ।।१५६।।

१३६. **गूर उद्यमने** । गूरयते । गूरणा ।।१५७।।

१३७. **शम लक्ष आलोचने** । शामयते । अशीशमत । लक्षयते अललक्षत । आलोचनादन्यत्र लक्षयतीति परस्मैपदमेव ।।१५८,१५९।।

१३८. **कुत्स अवक्षेपणे** । कुत्सयते । अकुत्सयत । अचुकुत्सत । कुत्सा ।।१६०।।

१३९. **भल आमण्डने** । भालयते । उदभालयत ।।१६१।।

१४० **कूट अप्रमादे** । कूटयते । कुट प्रतापन **इत्येके** । कोटयते । अन्यत्र कोटयति ।।१६१।।

१४१. **त्रुट च्छेदने** । त्रोटयते ।।१६३।।

१४२. **वञ्चु प्रलम्भने** । वञ्चयते । अववञ्चत । वञ्चना । वञ्चतीति भ्वादिपाठात् ।।१६४।।

१४३. **वृषु शक्तिसम्बन्धे** । वर्षयते । अववर्षत अवीवृषत । वर्षणा । अन्यत्र वर्षतीति ।।१६५।।

१४४. **मद तृप्तियोगे** । मादयते । अन्यत्र माद्यति ।।१६६।।

---

(१९) स्या(श्य) ल पुत्र इति । स्य(श्य)ल वितर्क इत्यस्माच्चुरादिणि-जन्तात् पचाद्यच् । तेन स्या (श्य)लशब्दोऽन्तोदात्त इति हि तत्र न्यासकार-वाक्यम् ।

१४५. **दिवु परिकूजने**। देवयते परिदेवकः। अन्यत्र दीव्यतीति। वञ्चुप्रभृतिमुदितं पठन्ति। स एवायं धातुरर्थान्तिरे चुरादिरित्येवं बोधनार्थम् (२०) ॥१५७॥

१४६. **गॄ विज्ञाने**। गारयते। अन्यत्र गिरति गृणातीति ॥१६८॥

१४७. **विद वेदनाख्याननिवासेषु**। वेदयते। निवेदयाञ्चक्रे। अन्यत्र वेत्ति वेद विद्यते विन्दते विन्दति विन्ते (२१) ॥१६९॥

१४८. **मन स्तम्भे**। मानयते। अन्यत्र मन्यते मनुते ॥१७०॥

१४९. **यु जुगुप्सायाम्**। यावयते। अन्यत्र यौति युनाति ॥१७१॥

१५०. **कुस्म कुस्मयने**। कुत्सितस्मयनेऽस्य वृत्तिरिष्यते। कुस्मयते। कुस्मयिता। अकुस्मयत। अचुकुस्मत। चुकुस्मयिषते। कुस्मयितः। कुस्मकः। कुस्मयतेः क्विप्—कूः। कुस्मौ। कुस्मः ॥१७२॥

(२) **कुस्म नाम्नो वेति**— कुस्मयत इति कुस्म इति प्रातिपदिकाद्वा सिद्धमित्यर्थः। कुस्म इत्यस्मात् प्रातिपदिकात् तत्करोतीति णिज्विधेयः। इत्थं णिचि सिद्धे इह त्वात्मनेपदार्थं पठ्यते। न च कुस्म इति प्रातिपदिकं दृष्टमित्याह—**कुस्ममिति दृष्टमेव** (२२) **केचित्** पुनः कुपूर्वस्य स्मयतेः कुस्मयत इति सिद्धे कुस्मधातुं प्रत्याचक्षते। तान् प्रत्युक्तम्—**कुस्मयतिरकारित** इति। कारित इति णिचः **पूर्वाचार्य्यसंज्ञा**। कुस्मयति रकारित इति चेदण्यन्तः स्मयतिरिति चेदिहापि स्यादित्यर्थः। **कोर्नित्यसमासत्वात्**। अयुक्तमिदम्। अनन्ता हि निपाताः। कुशब्दोऽपि निपातो नित्यसमासविषयः प्रयुज्यते। ततोऽस्य तिङन्तसन्निकर्षे प्रयोगो न स्यात् (२३)। **उपसर्ग-**

---

(२०) अतो मैत्रेयमते उदित्त्वं प्रत्यभिज्ञानार्थम्। न णिचो विकल्पार्थं भवति। प्रत्यभिज्ञामात्रमेव तस्य फलमिति भावः।

(२१) "सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे।
विन्दते विन्दति प्राप्तौ श्यल्ँ लुक् श्नम् शेष्विदं क्रमात् ॥१॥इति।

(२२) कुशब्दात् स्मयतेरन्येष्वपि दृश्यते (३।२।१०१) इति डप्रत्यये कुगतिप्रादयः (२।२।१८) इति समासेन कुस्मशब्द इति भावः।

(२३) कुगतिप्रादयः (२।२।२८) इत्यत्र अतिङिति (२।२।१९) सम्बन्धान्न समासः। अतो नैकपद्यम्।

**योगे च** (२४) तर्हि कोः प्रागुपसर्गयोग इष्यते । लिडादिप्रत्यये इडागमे द्विर्वचने गुणे भेद उदाहृत एव (२५) अतः **कुस्मधातोः कारित** एव कर्त्तव्यः (२६) । णिजेब कर्त्तव्य इत्यर्थः ।

**चितिप्रभृतय एते आत्मनेपदिनः ।**

अथ आ गणान्ताद धातूननूद्य पुनर्द्वितीयं परस्मैपदिप्रकरणमधुनोच्यते । येऽपि गणान्तरे साक्षान्न दृश्यन्ते तेऽपि शब्विकरणस्य भ्वादेराकृतिगणत्वात् तत्र वेदितव्याः ।

१५१. **चर्च अध्ययने** । चर्चयति । चर्चा । अन्यत्र चर्चति ॥१७३॥

१५२. **बुक्क भाषणे** । बुक्कयति । अन्यत्र बुक्कति ॥१७४॥

१५३. **शब्द शब्दक्रियायाम्** । शब्दयति । भाषणेऽपि शब्दविशेषेऽस्य वृत्तिं स्मरन्ति—शब्दायते । शब्दायमान इति तु शब्दं करोतीति व्युत्पत्त्या । **उपसर्गादाविष्कारे** । प्रशब्दयति । विशब्दयति ॥१७५॥

१५४. **कण निमीलने** । काणयति । काणः । अन्यत्र कणति ॥१७६॥

१५५. **जभि नाशने** । जम्भयति । जम्भत इति तु जभ इत्यस्य रूपम् ॥१७७॥

१५६. **षूद क्षरणे** । सूदयति । असूषुदत । सुषूदयिषति । अन्यत्र सूदते ॥१७८॥

१५७. **जसु ताडने** । जासयति । अर्थभेदात् पुनः पठ्यते । जस्यतीति दिवादेर्जसु मोक्षण इत्यस्य ॥१७९॥

१५८. **पश बन्धने** । पाशयति । पाशाद् विमोचयति विपाशय-

---

(२४) ते प्राग् धातोः (१।४।७९) इति कुप्रस्मयत इति स्यात् । एवञ्च कुस्मयाञ्चक्र इत्याम् न स्यात् । इति अट् च कोः परः स्यात कुप्रास्मयत इति ।

(२५) चुकुस्मयिषत इत्यत्र कोर्द्वित्वं न स्यादित्थं कुस्मयितेत्यादाविडभावः कुस्मायक इत्यादिबहूपप्लवसम्भवः । तेन कारित एव ।

(२६) कुस्मधातोः कुस्मधातुलाभायेत्यर्थः । कुस्म इति प्रातिपदिकात् कारितेन णिच्प्रत्ययेन धात्वर्थे (तत् करोतीत्यर्थे) कुस्मयते इति विकल्प लभ्यत इत्याशयः ।

तीति चोक्तम् । पश बन्धन इति युजादावेके पठन्ति —पाशयति पशति ॥१८०॥

१५९. **अम रोगे** । आमयति । आमः । अन्यत्र अमति । अमः ॥१८१॥

१६०. **चट स्फुट भेदने** । चाटयति । उच्चाटनम् । प्रचाटनम् । स्फोटयति आस्फोटयाञ्चकार । स्फोटकः । अन्यत्र स्फुटति स्फोटते । चुरादिणिचोऽनित्यत्वाच्चटति विचटतीति च ब्रुवते ॥१८२,१८३॥

१६१ **घट संघाते** । घाटयति । उदघाटनम् (२७) अन्यत्र घटते घटयति ॥१८४॥

(३) **हन्त्यर्थाश्च** । येऽन्येषु नवसु गणेषु हन्त्यर्थाः सन्ति त इह द्रष्टव्याः (२८) । घातयति । तर्हयति । ताडयति । यस्त्वत्र हन्त्यर्थः पठ्यते स कार्य्यविशेषार्थ इत्युन्नेयम् ।

१६२. **दिवु अर्द्दने** । देवयति शत्रून् । परिकूजने पूर्वं दर्शितः । अन्यत्र दीव्यतीति ॥१८५॥

१६३. **अर्ज प्रतियत्ने** । अर्जयति । आर्जिजत् । अन्यत्रार्जति ।

१६४. **घुषिर् अविशब्दने** । घोषयति । अजूघुषत् । घुषिरविशब्दने (७।२।२३) इत्यत्र विशब्दनप्रतिषेधाद् घुषेर्णिज् विकल्प्यत इत्येतत् साधितमनेन । घोषति । "**जुघुषुः पुष्यमाणवा**" इति विशब्दने सिध्यति । एतदुपलक्षणम् । तेन विचटति तनतीत्यादि सिध्यति । भ्वादिपठितस्य घोषति अघुषद् अघोषीदिति ॥१८६॥

१६५. **आङ् क्रन्द सातत्ये** । आङः परः क्रन्दः सातत्ये णिचमुत्पादयति । आक्रन्दयति । आक्रन्दः । आक्रन्दः । आक्रन्दतीत्यन्यत्र ॥१८८।

१६६. **लस शिल्पयोगे** । लासयति (२९) । अन्यत्र लसति ॥१८९

१६७. **तसि भूष अलङ्कारे** । अवतंसयति वतंसयति । अवतंसः

---

(२७) प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिति भारविः । कमलवनोद्घाटनं कुर्वते य इति सूर्य्यशतके ।

(२८) ते स्वार्थे णिचं लभन्त इत्यर्थः ।

(२९) क्वचिदयं मूर्धन्यान्तः पठ्यते । चपुस्तके मूर्धन्यान्तः ।

वतंसः। भूषयति । अबूभुषत् । भूषयते रथ्यां स्वयमेव । अन्यत्र भूषति ॥१९०,१९१॥

१६८. **मोक्ष असने** । असनं क्षेपः । मोक्षयति शरान् । मोक्षयति अस्त्रम् ॥१९२॥

१६९. **अर्ह पूजायाम्** । अर्हयति । अर्हणा । अन्यत्रार्हति ॥१९३॥

१७०. **ज्ञा नियोजने** । आज्ञापयति । अन्यत्र जानाति ॥१९४॥

१७१. **भज विश्राणने** । भाजयति । भाजः । भाजा भाजी । अन्यत्र भजति भजते ॥१९५॥

१७२. **शृधु प्रसहने** । शर्धयति । अन्यत्र शर्धते ॥१९६॥

१७३. **यत निकारोपस्कारयोः** । यातयति । यातना । अन्यत्र यतते । **निरश्च धान्यधनयोः** । निर्यातयति । प्रतिदाने पूर्ववदुदाहृतम् ॥१९७॥

१७४. **वस स्नेहनच्छेदापहरणेषु** । वासयति । वासना । अवहरणे च । प्रवासयत्यपराधिनम् । अन्यत्र वसति ॥१९८॥

१७५. **चर संशये** । विचारयति । विचारणा । अन्यत्र चरति ॥१९९॥

१७६. **च्यु हसने** । च्यावयति । अन्यत्र च्यवते ॥२००॥

१७७. **भुवोऽवकल्कने** । अवकल्कनं पीडनम् । भावयति ब्राह्मणान् तपः ॥२०१॥

१७८. **क्लृप च** । कल्पयति । अन्यत्र कल्पते ॥२०२॥

१७९. **रक लक आस्वादने** । राकयति । लाकयति । रघ लग इत्येके । राघयति लागयति ॥२०३,२०४॥

१८०. **अन्चु विशेषणे** । अन्चयति । अन्यत्राञ्चति ॥२०५॥

१८१. **लिगि चित्रीकरणे** । लिङ्गयति । अन्यत्र लिङ्गति ॥२०६॥

१८२. **मुद संसर्गे** । मोदयति सक्तून् घृतेन । अन्यत्र मोदते ॥२०७॥

१८३. **त्रस धारणे** । त्रासयति मृगान् । अत्र वारणे धारणशब्दः । अन्यत्र त्रस्यति त्रसति ॥२०८॥

१८४. **उध्रस उञ्छे**। ध्रासयति। पूर्वं एवायं धातुरिह पठ्यते। तेनायमुदिदिति ।।२०६।।

१८५. **मुच प्रमोचने**। मोचयति। अन्यत्र मुञ्चति मुञ्चते।२१०।

(4) **आ स्वदः सकर्मकात्**। स्वद आस्वादन इति वक्ष्यति। आ एतस्मात् सम्भविकर्मकादेव णिज् भवतीति मन्तव्यम्। असम्भावित-कर्मत्वे तु व्यावृत्तिः। आङ्पूर्वात् स्वद एव सकर्मकादित्येके।

१८६. **ग्रस ग्रहणे**। ग्रासयति फलम्। अन्यत्र ग्रसते ।।२११।।

१८७. **पुष धारणे**। पोषयत्याभरणम्। अन्यत्र पोषति, पुष्णाति, पुष्यति ।।२१२।।

१८८. **दल विदारणे**। दालयति। उद्दालः। अन्यत्र दलति।२१३

१८९. **पट पुट लट लुट तुजि पिजि मिजि लुजि भजि भुजि लघि त्रसि पिसि दशि कुसि कुशि दसि घट घटि वृहि वर्ह वल्ह गुप धूप विच्छ चीव पुथ लोचृ लोकृ णद कुप तर्क वृतु वृधु भाषार्थाः**। पाट-यति। अन्यत्र पटति। पोटयति। अन्यत्र पोटति। लाटयति। लोट-यति। अन्यत्र लुटति लोटति। तुञ्जयति। अन्यत्र तुञ्जति। पिञ्ज-यति। अन्यत्र पिङ्क्ते। मिञ्जयति। लुञ्जयति। भञ्जयति। अन्यत्र भनक्ति। भुञ्जयति। लङ्घयति। अन्यत्र लङ्घते लङ्घति। त्रंसयति। त्रंसनः। पिंसयति। दंशयति। अन्यत्र दशति। कुंसयति। कुंसः। भ्रूकुंसः भ्रुकुंसः भ्रकुंसः। कुंशयति। दंसयति। घाटयति। **अयं सङ्घातेऽपि**। अतः पुनर्घटिः पठ्यते अर्थभेदात्। अन्यत्र घटते घट-यति। घण्टयति। घण्टा। वृंहयति। वृंहणा। वर्हयति। अन्यत्र व्रर्हते। वल्हयति। अन्यत्र वल्हते। गोपयति। अन्यत्र गोपायति। धूपयति। अन्यत्र धूपायति। विच्छयति। अन्यत्र विच्छायति। चीव-यति। अन्यत्र चीवते। पोथयति। अपूपुथत्। अन्यत्र पुथ्यति। लोच-यति। अलुलोचत्। अन्यत्र लोचते। लोकयति। अन्यत्र लोकते। नादयति। अन्यत्र नदति। कोपयति। अन्यत्र कुप्यति। तर्कयति। **ऊहेऽप्ययमधीयते**। वर्त्तयति। अवीवृतत् अववर्त्तत्। अन्यत्र वर्तते। वर्द्धयति। अवीवृधत् अववर्धत्। अन्यत्र वर्द्धते। भासार्था **इत्येके**। भासार्था दीप्त्यर्थाः। तेऽप्यत्रेत्येके ।।२१४-२४७।।

१९०. **पूरी आप्यायने**। पूरयति। अन्यत्र पूर्य्यते ।।२४८।।

**१९२. रुज हिंसायाम्** । रोजयति । अन्यत्र रुजति ॥२४९॥

**१९२. ष्वद आस्वादने** । आस्वादयति यवागूम् । असिष्वदत्।२५०

**इति स्वदादिः ।**

(5) **आधृषाद्वा** । धृषु प्रसहन इति वक्ष्यति । एतस्मात् प्राग् वा णिज् भवतीति मन्तव्यम् । चुरादित्वान्नित्यं प्राप्तस्य णिचो विकल्पः क्रियते । युजादिभ्योऽन्यत्रापि क्वचिद् यथाभिधानं विकल्प इष्यते ज्ञापककरणादित्युक्तम्❋ ।

**१९३. युज पृच संयमने** । योजयति योजति । अन्यत्र युनक्ति । पर्चयति पर्चति । अन्यत्र पृणक्ति ॥२५१-२५२॥

**१९४. अर्च पूजायाम्** । अर्चयति अर्चति । युजादिषु ञितां तावत् कर्त्रभिप्राये क्रियाफले आत्मनेपदित्वम् । केवलानामप्यर्चिकथ्यर्दिशुन्धच्छदिमृषीणां स्वरितेत्त्वं मन्यन्ते । तेनाञ्चते इत्यपि भवति । अत्र च भ्वादावर्च पूजायामिति लिङ्गमुक्तम् । अन्यत्रार्चति ॥२५३॥

**१९५. षह मर्षणे** । साहयति सहति । **"स एवायं नागः सहति कलभेभ्यः परिभवम् ।"** सहति प्रतिभटम् । **"ततः प्रोदसहन् सर्वे ।"** अन्यत्र सहते ॥२५४॥

**१९६. ईर क्षेपे** । ईरयति ईरति । अन्यत्र ईर्त्ते ॥२५५॥

**१९७. ली द्रवीकरणे** । विलापयति विलीनयति विलाययति लयति (३०) । अन्यत्र लीयते लिनाति ॥२५६॥

**१९८. वृजी वर्जने** । वर्जयति वर्जति । वर्जितम् । अन्यत्र वृङ्क्ते वृणक्ति ॥२५७॥

**१९९. वृञ् आवरणे** । वारयति वरति वरते । अन्यत्र वृणोति वृणुते ॥२५८॥

---

(३०) अत्र माधवः "विभाषा लीयते (६।१।६१) इत्यात्त्वविकल्पमस्यापीच्छन् मैत्रेयो लीलोर्नुग्लुका (७।३।३९) इत्यात्त्वपक्षे लुको विकल्पान्नालुकं चोदाजहार । अनात्त्वे तु नुक् । तदभावे वृद्ध्यायौ च । तदयुक्तम् । आत्त्वे लीनाति लीयत्योर्यका निर्द्देश इति भाष्ये उक्तत्वादस्यात्त्वाभावात् ।" इति ।

❋ द्र०—पृष्ठ १४३, १०।५५ धातुसूत्रव्याख्याने ।

२००. **जॄ वयोहानौ** । जारयति जरति ! अन्यत्र जीर्य्यति जृणाति ॥२५९॥

२०१. **रिच वियोजनसंपर्चनयोः** । रेचयति रेचति । अन्यत्र रिङ्क्ते रिणक्ति ॥२६०॥

२०२. **शिष असर्वोपयोगे** । शेषयति शेषति । पर्य्यशेषयत् पर्य्यशेषत् । अन्यत्र शिनष्टि । **विपूर्वोऽतिशये** । विशेषयति विशेषति विशेष्यते ॥२६१॥

२०३. **तप दाहे** । तापयति तपति । तपते । अन्यत्र तप्यते तपतीति ॥२६२॥

२०४. **तृप तृप्तौ** । तर्पयति तर्पति । अततर्पत् अतीतृपत् । तृपितम् । अन्यत्र तृप्यति तृप्नोति ॥२६३॥

२०५. **छृदी सन्दीपने** । छर्दयति च्छर्दति । छर्द्दिष्यति । कृतादिसाहचर्य्यादिड्विकल्पं नास्य मन्यन्ते (३१) । छृणः । छृणवान् । अन्यत्र च्छृणन्ति च्छृन्ते ॥२६४॥

२०६. **दृभी भये** । दर्भयति दर्भति । दृब्धम् । अन्यत्र दृभ्यतीति ॥२६५॥

२०७. **दृभ संदर्भे** । पूर्ववदुदाहरणम् । दृभितमिति विशेषः ।२६६।

२०८. **श्रथ मोक्षणे** । श्राथयति श्रथति ॥२६७॥

२०९. **मी गतौ** । माययति मयति । मेता । अचौरादिकैः साहचर्य्यान् मिमीषति । अन्यत्र मीनाति ॥२६८॥

२१०. **ग्रन्थ बन्धने** । ग्रन्थयति ग्रन्थति । अन्यत्र ग्रथ्नाति (३२) ॥२६९॥

२११. **क्रथ हिंसायाम्** । चौरस्योत्क्राथयति । क्रथति क्रथते । अन्यत्र क्रथयति ॥२७०॥

---

(३१) रौधादिकस्यैवेड्विकल्पः । अत एवायं निष्ठायामनिडर्थमीदित् पठ्यते ।

(३२) ङपुस्तकेऽत्र श्रथ बन्धने श्राथयति श्रथतीति दृश्यते । एतल्लिपिकरप्रमाद इति प्रतिभाति । माधवीयधातुवृत्तौ भट्टोजिग्रन्थे चात्र ग्रन्थ बन्धन इत्यस्ति ।

२१२. **शीक मर्षणे** । शीकयति शीकति । अन्यत्र शीकते ॥२७१॥

२१३. **चीक च** । चीकयति चीकति । चीका ॥२७२॥

२१४. **अर्द्द हिसि हिंसायाम्** । अर्दयति अर्दति अर्द्दते । आर्दिदद् । आर्दीत् । अर्दिदिषति । हिंसयति हिंसति । अन्यत्र हिनस्ति ॥२७३, २७४॥

२१५. **आङः षद पद्यर्थे** । (३३) आसादयति आसीदति । आसत्ता । आसात्सीत् । अन्यत्र सीदति । असदत् ॥२७५॥

२१६. **शुन्ध शौचकर्मणि** । शुन्धयति शुन्धति शुन्धते । शुधितम् । अन्यत्र शुन्धति ॥२७६॥

२१७. **छद अपवारणे** । छादयति छदति छदते । उरश्छदः । छन्नः । छत्रम् । छात्रः । छदिः । छद्म । छादिः ॥२७७॥

२१८. **जुष परितर्पणे** । जोषयति जोषति । अन्यत्र जुषते ।२७८।

२१९. **धूञ् कम्पने** । धावयति धवति धवते । अन्यत्र धुनाति धुनीते । धूनोति (३४) ॥२७९॥

२२०. **प्रीञ् तर्पणे** । प्राययति प्रयति प्रयते । ञित्त्वफलं केवले चरितार्थम् इति ण्यन्तात् परस्मैपदमेव ॥२८०॥

२२१. **श्रन्थ ग्रन्थ सन्दर्भे** । ग्रन्थयति ग्रन्थति । अन्यत्र ग्रथ्नाति ग्रन्थते । श्रन्थयति श्रन्थति । अन्यत्र श्रन्थते श्रथ्नाति ॥२८१, २८२

२२२. **आप्लृ लम्भने** । आपयति आपति । आपत् । अन्यत्राप्नोति (३५)॥२८३॥

२२३. **तनु श्रद्धोपकरणयोः** । तानयति तनति । तनित्वा तन्त्वा ।

---

(३३) पद्यर्थो गतिः ।

(३४) "धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चम्पकपुष्परेणून् यत् कानने धवति चन्दनमञ्जरीश्च ॥१॥" इति कविरहस्यम् । अयं भ्वादौ क्र्यादौ तुदादौ स्वादौ च । स्वादौ ह्रस्वोपि ।

(३५) अत्र माधवः—"मैत्रेयेणापयत इत्यात्मनेपदमपि दर्शितम् । अन्ये तु नैतन् मृष्यन्ति ।" इति अस्मदधिगतपुस्तकेषु त्वेतन्नास्ति ।

नितान्तम् । अन्यत्र तनोति तनुते । ततः । **उपसर्गाच्च दैर्घ्ये** । आतानयति आतनति । वित नयति वितनति । अन्यत्र आतनोति । वितनोति ॥२८४॥

२२४. **वद सन्देशने** । वादयति वदते वदति । अन्यत्र वदति ।२८५

२२५. **मान पूजायाम्** । मानयति । मानति । अन्यत्र मीमांसते ॥२८६॥

**इति परस्मैभाषा उदात्तेतः ।**

२२६. भू **प्राप्तावात्मनेपदी** । आकुस्मादात्मनेपदीति प्रकरणे भू प्राप्ताविति वक्तव्ये आत्मनेपदीति वचनं केवलाणिजन्ताच्चात्मनेपदं यथा स्यात् । भावयते (३६) । सूर्य्योद्गमनं सम्भावयते । इत्थम्भूतः । अन्यत्र भवति ॥२८७॥

२२७ **वच भाषणे** । वाचयति वचति । वाचयतः वचतः । अवीवचत् । अवाक्षीत् । अन्यत्र वक्ति ॥२८८॥

२२८. **गर्ह निन्दने** । गर्हयति गर्हति । अन्यत्र गर्हते ॥२८९॥

२२९. **मार्ग अन्वेषणे** । मार्गयति मार्गति । अममार्गत् अमार्गीत् (३७) ॥२९०॥

२३०. **कठि शोके** । कण्ठयति कण्ठति । अचकण्ठत् अकण्ठीत् । अन्यत्र कण्ठते ॥२९१॥

२३१. **मृजू शौचालङ्कारयोः** । मार्जयति मार्जति । मार्जिता मार्ष्टा । मार्जयित्वा मार्जित्वा मृष्ट्वा । मृष्टम् । अन्यत्र मार्ष्टि ।२९२

२३२. **मृष तितिक्षायाम्** । मर्षयति मर्षति । अन्यत्र मृष्यति मृष्यते । मर्षति ॥२९३॥

२३३. **धृष प्रसहने** । धर्षयति धर्षति । अन्यत्र धृष्णोति ॥२९४॥

२३४. **पश बन्धने** । पाशयति पशति ॥२९५॥

२३५. **इति युजादौ आधृषीयाः** । एते युजादयो विकल्पितणिचः ।

---

(३६) पुरुषकारधनपालशाकटायनादिमतानि मैत्रेयमतप्रतिकूलम् । एतन्मतेषु प्राप्त्यर्थेऽपि अयं परस्मैपदी । एवञ्च सुधाकरः सुराष्ट्रमभवदित्यादि प्रयुज्यत इत्याह । सुराष्ट्रमभवत्=शोभनं राज्यमलभतेत्यर्थः ।

(३७) वरं वरेण्यो नृपतेरमार्गीदिति भट्टिः ।

**इतोऽदन्ता उच्यन्ते –**

२३६. **कथ वाक्यप्रबन्धे** । कथयति । अचकथत् । कथा ।।२९६।।

२३७. **वर ईप्सायाम्** । वरयति । अववरत् ।।२९७।।

२३८. **गण संख्याने** । गणयति । अजीगणत् अजगणत् । गण्यः । गणनीयः । गणेयः । प्रगणास्ते । प्रगणौ । सुगाण् । सुगाणौ । सुगाणः । सुगाण्ट्सु सुगाण्सु सुगाण्ठ्सु (३८) ।।२९८।।

२३९. **शठ श्वठ सम्यगाभाषणे** । शठयति । श्वठयति ।।२९९, ३००।।

२४०. **पट वट ग्रन्थे** । पटयति । वटयति । अन्यत्र पटति वटति ।।३०१, ३०२।।

२४१. **रह त्यागे** । रहयति । अररहत् । विरहः ।।३०३।।

२४२. **स्तन-गदी देवशब्दे** । स्तनयति । स्तनयित्नुः (३९)गदयति गदयित्नुः **"देवो मेघे सुरे राज्ञि"** इति मननाद् देवशब्दे मेघध्वनावित्यर्थः । प्रथमाद्विवचननिर्देशो वैचित्र्यार्थः ।।३०४,३०५।।

२४३. **पत गतौ** । पतयति । पतयामास । पतयालुः । अन्यत्र पतति । अपप्तत् । (४०) ।।३०६।।

२४४. **पष अनुपसर्गे** । पषयति । उपसर्गात्तु प्रपषति ।।३०७।।

२४५. **स्वर आक्षेपे** । स्वरयति । स्वरयिष्यति । स्वरः ।।३०८।।

---

(३८) प्रपूर्वाद् गणयतेर्विच् प्रगण् । क्विपि तु सुगाण् इति । अनुनासिकस्य क्विझलोः (७।४।१५) इति दीर्घः ।

(३९) अज्दन्त्यपरा इति षोपदेशलक्षणमनेकाक्षु न । स्मिङाद्येकाच्साहचर्यात् । तेन तिस्तनयिषतीति षत्वं न । अभिनिस्तनो मेघस्येति संज्ञाभावान्न षत्वम् ।

(४०) अत्र पत गतौ वेति माधवादिषु पाठः । वा णिजन्त इति वाशब्दस्यार्थः । वादन्त इत्येके । प्रथमपक्षे पतयति पतति । पताञ्चकार । णिज्विकल्पस्य प्रयोजनमस्यानेकाच्त्वादाम् । पताञ्चकार । अपतीदिति नाङ् । अदन्तपक्षे पतयति पातयति । अपीपतत् ।

२४६. **रच प्रतियत्ने** । रचयति व्यरचयत् ! अररचत् ॥३०६॥

२४७. **कल संख्याने गतौ च** । कलयति । कलयामास ॥३१०॥

२४८. **चह परिकल्कने** । चहयति । विचहः । अन्यत्र चहति ॥३११॥

२४६. **मह पूजायाम्** । महयति । महयामास । महयाञ्चकार । अन्यत्र महति अमहदित्येके ॥३१२॥

२५०. **सार कृप श्रथ दौर्बल्ये** । सारयति । कृपयति । श्रथयति ॥३१३॥

२५१. **स्पृह ईप्सायाम्** । स्पृहयति । स्पृहा । स्पृहयालुः ॥३१५॥

२५२. **भाम क्रोधे** । भामयति । अबभामत् । अन्यत्र भामते ॥३१७॥

२५३. **सूच पैशुन्ये** । सूचयति । सोसूच्यते । सूचिः । सूचसूत्रसत्रसामस्तेनसंग्रामसभाजस्थूलस्तनस्तोम इत्येतेषामषोपदेशत्वम् । षोपदेशत्वं ह्येकाचामेवेष्यते । ष्मिष्वदिष्वञ्जिष्वपिभिरेकाज्भिः साहचर्य्यात् । तेन सोसूच्यते तिस्तनयिषति सोसूत्रयत इत्यादौ न षत्वम्

२५४ **खेट भक्षणे** । खेटयति । आखेटना । खोट **इत्येके** । खोटयति ॥३१६॥

२५५. **खोट इति च** ॥३२०॥

२५६. **क्षोट क्षेपे** । क्षोटयति । क्षोटकः ॥३२१॥

२५७. **गोम उपलेपने** । गोमयति । गोमयाम्बभूव ॥३२२॥

२५८. **कुमार क्रीडायाम्** । कुमारयति । कुमारयाञ्चकार कुमारयामास । कुमारः । कुमारी ॥३२३॥

२५६. **कुशूल इत्येके** । कुशूलयति । कुशूलकः ॥३२४॥

२६०. **शील उपधारणे** । शीलयति । शीलितः । मांसशीलः । मांसशीला ॥३२५॥

२६१. **साम सान्त्वने** । सामयति । अससामत् ॥३२६॥

४६२. **वेल कालोपदेशे** । वेलयति । वेला । काल इत्यपि धातुरित्येके । कालयति । अचकालत् । कालना ॥३२७॥

२६३. **पल्यूल लवनपवनयोः** । पल्यूलयति । पल्यूलयामास ।३२८।

२६४. **वात सुखसेवनयोः** । वातयति । अववातत् ।।३२९।।

२६५. **गवेष मार्गणे** । गवेषयति । अजगवेषत् । गवेषणा ।।३३०।

२६६. **वास उपसेवायाम्** । वासयति । अववासत् ।।३३१।।

२६७. **निवास आच्छादने** । निवासयति । निवासयामास । अनिनिवासत् । निनिवासयिषति ।।३३२।।

२६८. **भाज पृथक्कर्मणि** । भाजयति । अबभाजत् । भाजनम् ।।३३३।।

२६९. **सभाज प्रीतिदर्शनयोः** । सभाजयति । अससभाजत् ।३३४।

२७०. **ऊन परिहाणे** । ऊनयति । ऊनः । न्यूनः । माषोनः । औनयीत् । औनिनत् (४१) ।।३३५।।

२७१. **ध्वन शब्दे** । ध्वनयति । अदध्वनत् । अन्यत्र ध्वनति ।।३३६।।

२७२. **कूट परिदाहे** । कूटयति । कूटम् ।।३३७।।

२७३. **केत ग्राम कुण गुण चामन्त्रणे** । चकारेण कूट इत्यपेक्षते । केतयति । ग्रामयति । कुणयति । गुणयति । कूटयति ।।३३८-३४१।।

२७४. **स्तेन चौर्य्ये** । स्तेनयति । अतिस्तेनत् । स्तेनः । स्तेयम् ।।३४२।।

**इति परस्मैभाषा उदात्ताः ।**

**अथ आ गर्वादात्मनेपदिनः ।**

२७५. **पद गतौ** । पदयते । पदयाञ्चक्रे । अन्यत्र पद्यते ।।३४३।।

२७६. **गृह ग्रहणे** । गृहयते । गृहयाञ्चक्रे । गृहम् । गृहयालुः ।।३४४।।

---

(४१) औनयीदिति तु च्छान्दसं रूपम् । तथा च नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः (३।१।५१) च्छन्दसि चङ् निषेधः । काममूनयीरिति तत्रोदाहरणम् । अडागमाभावश्च वैदिक एव । भाषायामौनिनदिति वृत्तिकारादयः । भट्टोजिमते तु औननदिति ।

२७७. **मृग अन्वेषणे**। मृगयते। मृगयाञ्चक्रे। मृग्यतीति कण्ड्वादिपाठात् (४२) ॥३४५॥

२७८. **कुह विस्मापने**। कुहयते। कुहयाञ्चक्रे। कुहकः। कुहूः। कुहना ॥३४६॥

२७९. **शूर वीर विक्रान्तौ**। शूरयते। अशुशूरत। शूरः। वीरयते। अविवीरत। वीरः। वीर्य्यम् ॥३४७,३४८॥

२८०. **स्थूल परिवृंहणे**। स्थूलयते। अतुस्थूलत। तुस्थूलयिषते। स्थूलः ॥३४९॥

२८१. **अर्थ याच्ञायाम्**। अर्थयते। अर्थयाञ्चक्रे। आर्त्तथत। अर्त्तिथयिषते ॥३५०॥

२८२. **सत्र सन्तानक्रियायाम्**। सत्रयते। सिसत्रयिषते। सत्रम् ॥३५१॥

२८३. **गर्व माने**। गर्वयते। गर्वः। अन्यत्र गर्वति। गर्वप्रभृतिष्वदन्तत्वप्रयोजनं न दृश्यते। णिचोऽनित्यत्वेन यङोऽभावार्थमिति **केचित्** (४३) **इति पदादिः** ॥३५२॥

२८४. **सूत्र वेष्टने**। सूत्रयति। सूत्रयाञ्चकार। असुसूत्रत्। सोसूत्र्यते ॥३५३॥

२८५. **मूत्र प्रस्रवणे**। मूत्रयति। मोमूत्र्यते ॥३५४॥

२८६. **रूक्ष पारुष्ये**। रूक्षयति। रूक्षपेषं पिनष्टि। रूक्षम् ॥३५५

२८७. **पार तीर कर्मसमाप्तौ**। पारयति। तीरयति।३५६,३५७।

२८८. **पुट संसर्गे**। पुटयति। अपुपुटत्। अन्यत्र पुटति ॥३५८॥

२८९. **कत्र शैथिल्ये**। कत्रयति। कात्रेयकः ॥३५९॥

(6) **प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च**। प्रातिपदिकाद्धा-

---

(४२) मृग्यतीति दिवादिपाठादिति केचिन्मन्यन्ते इति मान्द्राजपुस्तकद्वये पाठः। न रत्नमन्विष्यति मृग्यते हि तदित्यत्र तु कर्मणि लकारः।

(४३) भट्टोजिमते तु "अदन्तत्वसामर्थ्याण्णिज्विकल्पः। धातोरन्त उदात्तः इति (६।१।१६२) इति लिटि आम् च फलम्" इति।

त्वर्थे णिज् भवति। तस्मिश्च णिचि इष्ठवत् (४४) कार्य्यमतिदिश्यते। पटुमाचष्टे करोति वा पटयति। अपीपटत्। लघयति। अलीलघत्। परत्वाद् वृद्धौ कृतायां सन्ध्यक्षरलोप इति अनग्लोपित्वम्। **केचित्** पुनर्नाग्लोप (७।४।२) इत्यत्र अगिति प्रत्याहारग्रहणसामर्थ्यादकृतायामेव वृद्धौ सन्ध्यक्षरलोप इत्यग्लोपित्वे टिलोपमिच्छन्ति। तन्मते चापपटत् अललघदिति भवति। आशिषं करोति आशिषयति। **प्रकृत्यैकाच्** (६।४।१६३) इति प्रकृतिभावान्न टिलोपः। पठन्तमाचष्टे पठयति। युवानमाचष्टे यवयति। स्रग्विणमाचष्टे स्रजयति। स्थिरमाचष्टे स्थापयति। बाहुल्याद् वृद्ध्यभावे स्थपयति च। कुमारीमाचष्टे कुमारयति। खट्वयति (४५)।

(7) **तत्करोति तदाचष्टे**। यद्यप्यनेन वाक्यार्थो निर्दिश्यते तथाप्याख्यातार्थस्य प्राधान्यात् प्रधानमाख्यानं करणं वेति तस्यैव प्रत्ययार्थत्वम्। परिशिष्टस्तु प्रकृत्यर्थ इति द्वितीयान्तात् प्रत्यय ! तथाचैवोदाहृतम्।

(8) **तेनातिक्रामति**। अश्वेनातिक्रामति अश्वयति। हस्तिनातिक्रामति हस्तयति।

(9) **धातुरूपञ्च**। धातुः स्वेन रूपेणावतिष्ठते। बहुलवचनानुवृत्तेः कृल्लुक् प्रकृतिवच्च कारकं भवति। सीताहरणमाचष्टे सीतां हारयति। कंसवधमाचष्टे कंसं घातयति। आख्यानात् कृदन्तात् तदाचष्ट इति कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्चकारकम् (३।१।२६, वा) इत्यनेन चायमर्थो दर्शितः।

(10) **कर्त्तृकरणाद् धात्वर्थे**। कर्त्तुर्यत् करणं साधकतमं ततो णिज् भवति। दात्रेण लुनाति दात्रयति। असिना च्छिनत्ति असयति। परशुना च्छिनत्ति परशयति। करणस्य कर्त्तुग्रहणं विशेषणम्।

---

(४४) इष्ठवत्कार्य्यं टिलोपादिकम्। णाविष्ठवत् प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोर्लुक्कन्विध्यर्थमिति (६।४।१५५, वार्त्तिक)।

(४५) पट्वीमाचष्टे पटयति। बहुलवचनादिति अधिकः पाठोऽत्र दृश्यते गघपुस्तकयोः।

किमर्थम् ? चक्षुरादीन्द्रियवचनो यः करणशब्दस्तत्परिग्रहो **मा** भूदिति। तत्परिग्रहे चक्षुरादिशब्देभ्य एव स्यात्।

२६०. **चित्र चित्रीकरणे**। चित्रयति आलेख्यं करोतीत्यर्थः। चित्रं करोति चित्रीयत इत्याश्चर्य्यं करोतीत्यर्थः। **कदाचिद् दर्शने च**। चित्रयति चक्षुः। चित्रयति वक्षः ॥३६०॥

२६१. **अंस समाघाते**। अंसयति। अंसः ॥३६१॥

२६२. **वट विभाजने**। वटयति। वटेः पुनः पाठोऽर्थभेदात् ॥३६२

२६३. **लज प्राणने**। लजयति ॥३६३॥

२६४. **वटि लजि इत्येके**। वण्टयति। लञ्जयति लञ्जना। अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्य**परे**। वण्टापयति। लञ्जापयति ॥३६४॥

२६५. **मिश्र सम्पर्के**। मिश्रयति। मिश्रं करोति मिश्रतीति च दर्शितम् ॥३६६॥

२६६. **संग्राम युद्धे**। संग्रामयते। असंग्रामयत। **तस्थौ सिसंग्रामयिषुः शितेषुरिति भट्टिः**। संग्रामः ॥२६७॥

२६७. **स्तोम श्लाघायाम्**। स्तोमयति। स्तोम्यम्। अग्निष्टोमः ॥३६८॥

२६८. **छिद्र कर्ण भेदने**। छिद्रयति। कर्णयति। कर्णेनानुभवति आकर्णयति, कर्णेन भावयति कर्णयतीति व्याचक्षते ॥३७९-३७०।

२६९. **अन्ध दृष्टचुपघाते**। अन्धयति। अन्धः ॥३७१॥

३००. **दण्ड निपातने**। दण्डयति। अददण्डत्। दण्डः ॥३७२॥

३०१. **अङ्क लक्षणे**। अङ्कयति। अङ्कः। अन्यत्राङ्कते ॥३०३॥

३०२. **अङ्ग पदे लक्षणे च**। अङ्गयति। अङ्गयामास। अङ्गना। अन्यत्र अङ्गति ॥३७४॥

३०३. **सुख दुःख तत्क्रियायाम्**। तदिति सुखदुःखप्रातिपदिकार्थो निर्दिश्यते। सुखयति। दुःखयति। तत्करोतीत्येवं सिद्धे सोपसर्गसमुदायाण्णिजर्थमिदम्। असुखयत्। अदुःखयत्। सुखं वेदयते सुखायते।

दुःखं वेदयते दुःखायत इत्येव भवति। सुख्यति दुःख्यतीति कण्ड्वादि-पाठात् ॥३७५,३७६॥

३०४. **रस आस्वादनस्नेहनयोः**। रसयति। निरसयति। अन्यत्र रसति ॥३७७॥

३०५. **व्यय वित्तसमुत्सर्गे**। व्ययति। अव्ययत्। अन्यत्र व्ययति व्ययते अव्ययीत् ॥३७८॥

३०६. **रूप रूपक्रियायाम्**। रूपयति। रूपं पश्यति निरूपयति। विरूपयति वस्त्रम् ॥३७९॥

३०७. **छेद द्वैधीकरणे**। छेदयति। अचिच्छेदत् ॥३८०॥

३०८. **व्रण गात्रविचूर्णने**। व्रणयति। अव्रणयत्। व्रणम् ॥३८१॥

३०९. **वर्ण वर्णवर्णक्रियाविस्तारगुणवचनेषु**। वर्णयति। वर्णयामास। वर्णं गृह्णाति वर्णयतीति च दर्शितम् ॥३८२॥

३१०. **लाभ प्रेरणे**। लाभयति। लाभयाञ्चकार। प्रलाभः। उपलाभः ॥३८३॥

(11) **बहुलमेतन्निदर्शनम्**। चुरादावदन्तधातुदर्शनं बहुलं वेदितव्यम्। अतोऽनुक्ता अपीह धातवो ज्ञेयाः।

३११. **पर्ण हरितभावे**। पर्णयति ॥३८४॥

३१२. **विष्क दर्शने**। विष्कयति ॥३८५॥

३१३. **क्षप प्रेरणे**। क्षपयति। क्षपितो विप्रः ॥३८६॥

३१४. **वस निवासे**। वसयति ॥३८७॥

३१५. **तुत्थ आवरणे**। तुत्थयति। **अतुत्थयदुत्थितोऽद्रेरिति माघः**। ॥३८८॥

एव गडयति, आन्दोलयति, डलयति, तुजयति तुजः, शुण्ठयति शुण्ठः, स्फटयति स्फटः स्फटिकः स्फटा, ओजयति ओजः, स्फुटयति स्फुटा स्फुटितः, अवधीरयतीत्यादयो यथाभिधानं वेद्याः।

(12) **णिङङ्गान्निरसने**। अङ्गवाचिनः प्रातिपदिकाण्णिचोऽपवादो णिङ् भवति निरसनेऽर्थे। हस्तौ निरस्यति हस्तयते। पादयते। चक्षयते।

(13) **श्वेताश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च** ।
णिङिति वर्त्तते । धात्वर्थं इति च । श्वेताश्वादीनाञ्चतुर्णां यथासंख्य-मश्वतरेतक इत्येते लुप्यन्ते णिङ् च धात्वर्थे भवति । श्वेताश्वमाचष्टे तेनाति क्रामति वा श्वेतयते । अश्वतरमाचष्टे अश्वयते । गालोडितम् (४६)आचष्टे गालोडयते । आह्वरकमाचष्टे आह्वरयते । अबाधापि णिचोबाहुलकादिति श्वेताश्वयतीत्याद्यपि भवति ।

(14) **पुच्छादिषु धात्वर्थ इत्येव सिद्धम्** ॥ (४७) पुच्छादिषु प्रातिपदिकेभ्यो धात्वर्थ इत्येव सिद्धम् आत्मनेपदं णिजन्ताद् बहुल-वचनाद् विज्ञेयम् । एवञ्च पुच्छभाण्डचीवरणिङ् ( ३।१।२० ) इति न कर्त्तव्यमिति । सिद्धशब्दश्चायं मङ्गलार्थः । आदौ च वृद्धि-शब्दः एध वृद्धाविति । मध्ये टुओश्वि गतिवृद्ध्योरिति वृद्धिशब्दः । एवं त्रिमङ्गलमिदं शास्त्रं समाप्तमिति । श्रीः (४८) ।

---

(४६) गालोडितं वाचां विमर्शः ।

(४७) **अत्र धातुपाठान्तर्गतगणसूत्राणि पठ्यन्ते । यथा**—(१) घटा-दयः षितः । (२) घटादयो मितः । (३) जनीजृष्क्नसुरञ्जोऽमन्ताश्च । (४) ज्वलह्वलह्मलनमामनुपसर्गाद्वा । (५) ग्लास्नावनुवमाञ्च । (६) कम्य-मिचमाञ्च । (७) शमोऽदर्शने । (८) यमोऽपरिवेषणे । (९) स्खदिरवप-रिभ्याञ्च इति **भ्वादौ** ।

(१०) चर्करीतञ्च इत्य**दादौ** ॥ (११) स्वादय ओदितः इति **दिवादौ** ॥ (१२) छन्दसि इति **स्वादौ** । (१३) नान्ये मितोऽहेतौ । (१४) कुस्मनाम्नो वा । (१५) हन्त्यर्थाश्च । (१६) आ स्वदः सकर्मकात् । (१७) आ धृषाद्वा । (१८) प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । (१९) तत् करोति तदाचष्टे । (२०) तेनातिक्रामति । (२१) धातुरूपञ्च । (२२) कर्त्तृकरणाद्धात्वर्थे । (२३) बहुलमेतन्निदर्शनम् । (२४) णिङङ्गान्निरसने । (२५) श्वेताश्व-तरगालोडिताह्वरकाणामश्वतरेतकलोपश्च । (१६) पुच्छादिषु धात्वर्थ इत्येव सिद्धम् । इति **चुरादौ** ।

(४८) एभ्योऽन्ये च केचित् सौत्रा धातवः सन्ति । ते च यथा—

१. ऋतिः—**ऋतेरीयङ्** (३।१।२९) **इत्यत्रोक्तः । ऋतीयते । प्रार्त्ती-यते । उपार्त्तीयते । ऋतीयाञ्चक्रे आनर्त्त । ऋतीयिष्यते अर्त्तिष्यति । आर्त्ती-यत । आर्त्तीयिष्ट आर्त्तीत् । अर्त्तितीयिषते अर्त्तितिषति । ऋतीयित्वा अर्त्ति-**

वृत्तिन्यासं समुद्दिश्य कृतवान् ग्रन्थविस्तरम् ।।
नाम्ना तन्त्रप्रदीपं यो विवृतास्तेन धातवः ।।१।।

---

त्वा ऋतित्वा । ऋतीया । "जुगुप्सा ऋतीया घृणा ।"

२-५. स्तन्भुस्तुन्भुस्कन्भुस्कुन्भु । तथाहि सूत्रम्—"स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च (३।१।५२) । सर्वे रोधनार्थाः । माधवमते तु प्रथमतृतीयौ स्तम्भार्थौ द्वितीयो निष्कोषणार्थश्चतुर्थो धारणार्थः । स्तभ्नोति स्तभ्नाति । विष्टभ्नाति विष्टभ्नोति । अवष्टभ्नोति अवष्टभ्नाति । तस्तम्भ । अवतष्टम्भ । स्तम्भिष्यति । स्तभ्नोतु स्तभ्नातु । स्तभ्नुहि स्तभान । स्तभ्नुयात् स्तभ्नीयात् । स्तभ्यात् । अस्तभत् अस्तम्भीत् । तिस्तम्भिषति । प्रतितिष्टम्भिषति । तास्तभ्यते । स्तम्भयति । अतस्तम्भत् । प्रतिष्टम्भः । बाहुप्रतिष्टम्भविवृद्धमन्युरिति रघुकाव्ये । स्तम्भित्वा स्तब्ध्वा । स्तब्धः । उत्तम्भः उत्तम्भितोडुभिरतीवतरां शिरोभिरिति माघः ।।२।।

स्तुभ्नोति स्तुभ्नाति । तुष्टुम्भ । स्तुम्भिष्यति । अस्तुम्भीत् । स्तुम्भित्वा स्तुब्ध्वा । स्तुब्धः ।।३।।

स्कभ्नोति स्कभ्नाति । विष्कभ्नोति विस्कभ्नाति । चस्कम्भ । स्कम्भिष्यति । अस्कम्भीत् । स्कम्भित्वा स्कब्ध्वा । स्कब्धः ।।४।।

स्कुभ्नोति स्कुभ्नाति । चुस्कुम्भ । स्कुम्भिष्यति । अस्कुम्भीत् । स्कुम्भित्वा स्कुब्ध्वा । स्कुब्धः ।।५।।

६. साति=सुखे । तथा च सूत्रम्—"अनुपसर्गाल्लिम्पविन्दधारिपादिवेद्युदेजिचेतिसातिसाहिभ्यश्च (३।१।१३८) हेतुमण्यन्तः । सातयति । सातयः । क्विपि सात् । परमात्मेत्यर्थः । सात्वन्तो भक्ताः ।।६।।

७. जु—गतौ वेगे च । सूत्रञ्च—"जुचंक्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः" (३।२।१५०) जवति । जुजाव । जोता । अजन्तत्वादनिट्त्वम् । जोष्यति । अजावीत् । जुजूषति । अजीजवत् । जवनः । प्रजवी । जूः । जुवौ । जूतिः । जवः । विजावको नाम देशः । वैजावकः । कच्छादिभ्यश्च (४।२।१३३) इत्यण् शैषिकः ।।७।।

८. तु गतिवृद्धिहिंसासु । सूत्रञ्च—"तुरुस्तुशम्यमः सार्वधातुके" (७।३।९५) । अयञ्च लुग्विकरण इति स्मरन्ति । तेनायमदादिः । तौति तवीति । तुतः तुवीतः । तुताव । तोता । तोष्यति । अतौषीत् । अयञ्छान्दस इत्यापिशलिमतमित्यदादिषूक्तम् ।।८।।

आकृष्य भाष्यजलधेरथ धातुनाम-
पारायणक्षपणपाणिनिशास्त्रवेदी ।
कालापचान्द्रमततत्त्वविभागदक्षो
धातुप्रदीपमकरोज्जगतो हिताय ।।२।।

इति महामहोपाध्यायश्रीमैत्रेयरक्षितकृतौ धातुप्रदीपे
चुरादीनां वृत्तिः ।।१०।।

धातुप्रदीपश्च परिसमाप्तः ।। शुभम् ।।

———

९. दभिः—अयं वार्त्तिकोक्तः । तथा च ण्यत्प्रकरणे लपिदभिभ्या-ञ्चेति वक्तव्यम् (३।१।१२४, वा) । दभति । ददाभ । दाभ्यम् ।।९।।

१०. चुलुम्प इति च वार्त्तिकोक्तो धातुः । चुलुम्पति चुलुम्पाञ्चकार । एभ्योऽधिकाः केचित् क्षदितदिशुप्रभृतय उणादिषु उक्ता इति शम् ।।१०।।

इति श्रीश्रीशचन्द्रचक्रवर्त्तिभट्टाचार्य्यकृतं
धातुप्रदीपविवरणं समाप्तम् ।।

———

# धातु-प्रदीपे व्याख्यातानां

# धातूनां वर्णानुक्रमेण-सूची

इह धातुवर्णानुक्रमसूच्यां प्रतिधातु गणसंख्या धातुसूत्रसंख्या (या प्रतिसूत्रमादौ विन्यस्ता) च निर्दिश्यते ।

**धातुगणाः**

| | |
|---|---|
| १—भ्वादयः | ६—तुदादयः |
| २—अदादयः | ७—रुधादयः |
| ३—जुहोत्यादयः | ८—तनादयः |
| ४—दिवादयः | ९—क्र्यादयः |
| ५—स्वादयः | १०—चुरादयः |

**धातुभेदाः**—द्विविधा इह धातुप्रदीपे धातवो व्याख्यायन्ते । तत्र प्रथमा ये व्याख्यात्रा साक्षादुपादाय व्याख्याताः । द्वितीया अन्येषां मतेन तत्तद् धातुव्याख्यान उपात्ताः । इह धातुसूच्यां द्वितीयप्रकारका धातवः सूक्ष्माक्षरेषु मुद्रिताः । तेषामग्रे या धातुसूत्रसंख्या निर्दिष्टा तस्या धातुसूत्रसंख्याया व्याख्यान एव ते द्रष्टव्याः ।

**टिप्पणी**—१—इह धातुसूच्यां धातूनामाद्याननुबन्धान् उत्सृज्य धातोर्निर्देशः कृतः । यथा—डुकृञ् करणे=कृञ् । टुवम उद्गिरणे=वम ।

२—ये ऽनुनासिकोपधा धातवस्ते धातुप्रदीपे नकारोपधाः पठ्यन्ते । यथा—अन्चु, अन्जु, उन्भ, तृन्फ इत्यादि (अन्यत्रैषां परसवर्णत्वेन निर्देशः क्रियते । यथा—अञ्जु, उम्भ, तृम्फ इत्यादि) । एतादृशो धातवोऽस्माभिर्धातुसूच्यां यथापाठं नकारोपधा एव निर्दिष्टाः ।

३—भ्वादिगणे ४५ तमे पृष्ठ ४१५, ४१६ धातुसंख्ये अनवधानेन द्विर्मुद्रिते—४१५. काशृ गतौ । ४१६. ऊह वितर्के । ४१५. गाहू विलोडने । ४१६. गृहू ग्रहणे । अत एतेषां धातूनां वर्णानुक्रमसूच्यां पूर्वमुद्रितां संख्यां दत्त्वा भ्रमनिरासार्थं टिप्पण्यां तत्तद्धातुसूत्रव्याख्यानन्तरं प्रदत्ता धातुसंख्या निर्दिष्टा । यथा—काशृ १, ४१५.[1] गाहू १, ४१५[2] ।

(टिप्पण्यां—१. धातुसंख्या ६४८ । २. धातुसंख्या ६५० ।)

१. द्र० पृष्ठ ७५, पं० ६।

| धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० |
|---|---|---|---|---|---|---|---|---|
| ईखि | १ | ८७ | उब्ज | ६ | २० | एठ | १ | १६४ |
| ईङ् | ४ | ३३ | उभ | ६ | २६ | एधँ | १ | २ |
| ईज | १ | १०८ | उर्द | १ | १८ | एषृ | १ | ३९६ |
| ईड | २ | ९ | उर्वी | १ | ३६६ | ओखृ | १ | ८५ |
| ईड | १० | ११२ | उष | १ | ४४६ | ओणृ | १ | २९३ |
| ईर | २ | ८ | उहिर् | १ | ४७३ | ओलडि | १० | ९ |
| ईर | १० | १९६ | ऊन | १० | २७१ | कक | १ | ७० |
| ईर्क्ष्य | १ | ३२६ | ऊयी | १ | ३१० | ककि | १ | ७३ |
| ईर्ष्य | १ | ३२६ | ऊर्ज | १० | १६ | कक्ख | १ | ८४ |
| ईश | २ | १० | ऊर्णुञ् | २ | ३० | कखे | १ | ५११ |
| ईष | १ | ३९३ | ऊष | १ | ४४२ | कगे | १ | ५१५ |
| ईष | १ | ४४३ | ऊह | १ | ४१६[1] | कच | १ | ९९ |
| ईह | १ | ४०५ | ऋ | १ | ६३२ | कचि | १ | १०० |
| उक्ष | १ | ४२२ | ऋ | ३ | १६ | कट | १ | २०८ |
| उख | १ | ८७ | ऋ | ९ | २६ | कटि | १ | २०८ |
| उङ् | १ | ६४४ | ऋच | ६ | १९ | कटे | १ | १८८ |
| उच | ४ | १११ | ऋच्छ | ६ | १५ | कठ | १ | २२१ |
| उच्छी | १ | १२९ | ऋज | १ | १०५ | कठि | १ | १६१ |
| उछि | १ | १२८ | ऋजि | १ | १०६ | कठि | १० | २३० |
| उछि | ६ | १३ | ऋणु | ८ | ५ | कड | १ | २४२ |
| उछी | ६ | १४ | ऋधु | ४ | १२८ | कड | ६ | ८२ |
| उज्झ | ६ | २१ | ऋधु | ५ | २४ | कडि | १ | १७५ |
| उठ | १ | २२५ | ऋन्फ | ६ | २७ | कडि | १० | ४२ |
| उध्रस | ९ | ५३ | ऋफ | ६ | २७ | कड्ड | १ | २४३ |
| उध्रस | १० | १८४ | ऋषी | ६ | ७ | कड्डि | १ | २३४ |
| उन्दी | ७ | १९ | एजृ | १ | १०७ | कण | १ | २९२ |
| उन्भ | ६ | २९ | एजृ | १ | १४१ | कण | १ | ५१७ |

१. द्र० धातुसंख्या ६४९ ।

